## अथ तृतीयोऽध्यायः ॥

### अथादावुत्तरे विभागे ह्रस्वं व्यञ्जनपरः ॥ १ ॥

अथेत्यधिकारः । विभागे क्रियमाणे संहिताप्रकृतिपदैः विभाग उत्तरपदस्यादौ । [1]व्यञ्जनपरः संहितायां पूर्वपदान्ते वर्तमानो दीर्घः पदकाले ह्रस्वमापद्यत इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

### देवा शीका सुम्ना श्वर्ता[2] वयुना हृदयाघोक्था[3] शुद्धा ॥२॥

इत्येतेषु ग्रहणेषु अवग्रहेषु व्यञ्जनपरः संहितायां दीर्घः पदकाले ह्रस्वमापद्यते । यथा—"देवायते" (सं. ३—५—५)। "शीकायते" (सं. ७—५—११) । "सुम्नायन्तः" (सं. १—५—११) । "पृथिव्या श्वावित्" (सं. ५—५—२०) । श्वा इत्येतस्मिन् ग्रहणे अश्वा इत्यस्मिन्नपि प्राप्नोति । कस्मात्? "अप्यकारादि" (१–५२) वचनात् । यथा—"अश्वावतीम्" (सं. ४–२–६) । "ऋतावरीः" (सं. १–१–३) । "वयुनाविदकः" ( सं. १—२—१३ ) । "हृदयाविधश्चित्" (सं. १–४–४५) । "वृका अघायवः" (सं. १—२—९) । "इन्द्राय त्वोक्थायुवे" (सं. १—४—१२) । "शुद्धायुवः" (सं. १—३—८)॥

### इन्द्रा वद्धन्वान्परः ॥ ३ ॥

---

1. व्यञ्जनमस्मात् परमिति व्यञ्जनपरः । संहितायाम् , पदादौ पदान्ते च वर्तमानो दीर्घः पदविभागसमये व्यञ्जनपरः सन् ह्रस्वमापद्यते । पदादौ दीर्घस्य पूर्वपदेन विभागः, पदान्ते दीर्घस्योत्तरपदेन विभागश्च भवति । संहिताप्रकृतिपदैरित्यत्र प्रकृतिशब्दस्य यथास्थितपाठ इत्यर्थः ।

2. श्वा ऋता इति च्छेदः ।

3. "घोक्ता" इति आ० ।

इन्द्रा इत्येतस्मिन्नवग्रहे वत्-वन्-वान्परः संहितायां दीर्घः पदकाले ह्रस्वमापद्यते । यथा—"इन्द्रावतीमपचितीम्" (सं. ५—७—४) । "इन्द्रावन्तो मरुतः" (सं. ४—७—१४) । "इन्द्रावान् स्वाहा" (सं. १—१—१२) । वद्वन्वान्पर इति किम्? "इन्द्रावरुणयोरहम्" (सं. २—५—१२) । "अश्विना सूनृतावती" (सं. १—४—६) । "ऊर्णावन्तं प्रथमः" (सं. ३—५—११) । "प्रजावान्" (सं. ७–१–७) । दीर्घः ॥

**चित्रा वपरः ॥ ४ ॥**

चित्रा इत्येतस्मिन्नवग्रहे दीर्घो वकारपरो ह्रस्वमापद्यते । यथा— "चित्रावसो स्वस्ति ते" (सं. १—५—५) । वपर इति किम्? "चित्रा-पूर्णमासे" (सं. ७—४—८)। चित्रा इति किम्? "मित्रावरुणौ" (सं. २—१—७) ॥

**प्रस्थेन्द्रिया द्रविणा विश्वदेव्या दीर्घा वीर्या विश्वा वाता त्वा[1] भङ्गुरा कर्णका वृष्णिया सुगोपर्क्सामाद्या सत्वा वर्षा पुष्पा मेघा प्रा स्वा ॥ ५ ॥**

इत्येतेष्ववग्रहेषु व्यञ्जनपरः संहितायां दीर्घः पदकाले ह्रस्वमापद्यते । यथा—"प्रस्थावद्रथवाहनम्" (सं.४ —२—५) । "इन्दो इन्द्रियावतः" (सं. १—४—२७) । "द्रविणावतः कुरुते" (सं. ५–३–११) । "विश्वदेव्यावते" (सं. १—४—१) । "दीर्घाधियो रक्षमाणाः" (सं. २—१—११) । "वीर्यावतीः" (सं. २—४—२) । "गन्धर्वो विश्वावसुः" (सं. ६–१–६)। "वातावद्वर्षन्" (सं. २–४–७) । "त्वावतो मघोनः" (सं. २—२—१२) । "भेत्तारं भङ्गुरावतः" (सं. १–५–६)। "कर्णकावत्येतया" (सं. १–५–७) । "वृष्णियावतस्त-वाग्ने" (सं.३–५–६)।"सुगोपातमो जनः" (सं. ४–२–११)। "ऋक्सामा-

1. "वातार्था भ इति" आ० ।

भ्यां यजुषा" (सं. १–२–३) । "अद्याश्वादेवैनम्" (सं. ३—१—७) । "सत्राजितं धनजितम्" (सं. ४—१—१) । "वर्षाह्वां जुहोति" (सं. २—४—१०) । "पुष्पावतीः प्रसूवतीः" (सं. ४—२—६) । "मेघायते स्वाहा" (सं. ७—३—११)। "ग्रावणेभिः सजोषसः" (सं. ४—२—४)। "स्वाधियं जनयथ्सूदयच्च" (सं. १—३—१४)॥

लोक-एव[1]-पूर्वेष्टा ॥ ६ ॥

इष्टा इत्येतस्मिन्नवग्रहे "लोक" "एव" इत्येवम्पूर्वो ह्रस्वमापद्यते । यथा—"अमुष्मिँल्लोक इष्टापूर्त्तेन" (सं. ३—३—८) । "सत्त्वेवेष्टापूर्ती" (सं. १—७—३) । लोकएवेष्टेति किम्? "एनमिष्टापूर्ते सँसृजेथाम्" (सं. ४—७—१३) ॥

शक्ती रथी त्विषी वाशी रात्र्योषध्याहुती व्याहृती स्वाहाकृती [2]ह्रादुनी शची चिती श्रोणी पृष्टी पूत्यभी च्चर्षणी पर्यधी पारी[3] ॥ ७ ॥

शक्त्यादय अवग्रहा व्यञ्जनपरा विभागे ह्रस्वमापद्यन्ते । यथा—"शक्तीवन्तो गभीराः" (सं. ४—६—६) । "रथीतमौ रथीनाम्" (सं. ४—७—१५) । "त्विषीमते" (सं. ४—५—२) । "वाशीमन्त इष्मिणः" (सं. २–१–११)। "रात्रीभिरसुभ्नन्" (सं. २–४–१)।"ओषधीभ्यः स्वाहा" (सं. ७–३–१९) । "आहुतीभिरनूयाजेषु" (सं. २–६–९) । "व्याहृतीभिर्हवींषि" (सं. १—६—१०) । "स्वाहाकृतीभ्यः प्रेष्य" (सं. ६—३—९) । "ह्रादुनीभ्यः स्वाहा" (सं. ७—४—१३) । "चष्टे शचीभिः" (सं. ४–२–५) द्वाभ्यां चितीभ्याम्" (सं. ५—७—५) । "श्रोणीभ्याम्" (सं. ७—३—१६) । "पृष्टीभ्यः स्वाहा"

---

1. "एवेष्टा" मु० । भू० ।
2. "ह्रादिनी" इति आ० ।
3. इदमनन्तरसूत्रं चैकीकृत्यैकमेव सूत्रं दृश्यते । मु० । भ०"।

(सं. ७—३—१६) । "पूतीगन्धस्यापहत्यै" (सं. २—२—२) । "अभीवृतो घृणीवान्" (सं. ३—५—११) । "ओमासश्चर्षणीधृतः" (सं. १--४--१६) । "वीरवन्तं परीणसम्" (सं. २--२--१२) । "अधीवासं या हिरण्यानि" (सं. ४—६—११) । "पारीणह्यस्य" (सं. ६—२—१) ॥

शत्रू विषू वसू अनू हनू [1]सू विभू इत्यवग्रहः ॥ ८ ॥

शत्र्वादयः अवग्रहा व्यञ्जनपरा विभागे ह्रस्वमापद्यन्ते । यथा— "शत्रूयतो हन्ता" (सं. १—६—५) । "विषूवान् सम्पद्यते" (सं. ७—४—८) । "अरमतिर्वसूयुः" (सं. ४—३—१३) । "अनूराधानक्षत्रम्" (सं. ४—४—१०) । अनू इत्येतस्मिन् ग्रहणे अननू इत्येतस्यापि विधिर्भवति । यथा—"प्रयाजवदननूयाजम्" (सं. ६—१--५) । "हनूभ्यां स्वाहा" (सं. ७—३—१६) । "सूयवसं सोदकम्" (सं. १—७—५) । "विभूदावन्ने" (सं. ३—५—८) । इत्यवग्रहः । देवा शीका इत्येवमादय अवग्रहा एव कार्या भवन्ति । अवग्रह इत्येकवचनान्तं देवा शीका इत्येवमादिभिः प्रत्येकं सम्बध्यते । किमर्थमिदमारभ्यते ? "विश्वावसू निदधिरे" (सं. ४—२—२), "कृष्णश्वा चतुरक्षः" (सं. ५—५—१९) इत्येवमादिषु ह्रस्वो मा भूदित्येवमर्थम् । इतीमे अवग्रहा व्याख्याताः ॥

अथानवग्रहा व्याख्यास्यन्ते । ये अनवग्रहास्ताननुक्रमिष्यामः—

अवा सचस्वा नुदा मृडा वर्द्धा शिक्षा रक्षाऽद्या भवा भजा यत्रा चरा पिबा ना धामा धारया धर्षा[3]घा वर्द्धया बोधाऽत्रा तला मुञ्चाश्वस्या[4] पृणस्वा हिष्ठा त्वन्तरा जनिष्वा युक्ष्वाऽच्छा[5] ॥ ९ ॥

---

1. "सूःवि" भू० ।
2. इत्यवग्रह इत्यत्र इतिशब्देन पूर्वोक्तः पदगणो निर्दिश्यते ।
3. "र्षा ह्वा व" आ० ।
4. "स्य पृ" आ० ।
5. "निष्या यक्ष्याऽच्छा" आ० ।

इत्येतानि पदानि व्यञ्जनपराणि विभागे ह्रस्वमापद्यन्ते । यथा— "अवा नो देव्या कृपा" (सं. ४—१—४) । "सचस्वा नः स्वस्तये" (सं. १—५—६) । "प्रणुदा नः सपत्नान्" (सं. ४—३—१२) । "मृडा जरित्रे" (सं. ४—५—१०) । "वर्द्धा नो अमवत्" (सं. २—६—११) । "शिक्षा नो अस्मिन्" (सं. ७—५—७) । "रक्षा च नः" (सं. ४—५—१०) । "अद्या देवान् जुष्टतमः" (सं ४—६—७) । "तूर्णितमो भवा पायुः" (सं. १—२—१ ) । "व्रजे भजा त्वं नः" (सं. १—६—१२) । "यत्रा नरः" (सं. ३—१—११) । "प्र चरा सोम" (सं. १—२—१०) । "पिबा सोममिन्द्र" (सं. २—४—१४) । "ना ह देभुः" (सं. १—२—१४) । "धामा ह यत्ते" (सं. ३—१—११) । "बृहस्पते धारया वसूनि" (सं. १—३—७) । "धर्षा मानुषान्" (सं. १—३—८) । "उत वा घा स्यालात्" (सं. १—१—४) । "तमग्ने वर्द्धया त्वम्" (सं. ४—६—३) । "बोधा नो अस्य" (सं. ४—२—३) । "अत्रा ते भद्राः" (सं. ४—६—७) । "तत्रा रथमुप" (सं. ४—६—६) । "प्र मुञ्चा व्यंहः" (सं. ४—७—१५) । "अश्वस्या विशस्ता" (सं. ४—६—९) । "पृणस्वा घृतेन" (सं. १—५—३) । "आपो हि ष्ठा मयोभुवः" (सं. ४—१—५) । हिष्ठेति किम्? "प्रतिष्ठा वा एकविँशः" (सं. ५—२—३) । "अग्ने त्वं तरा मृधः" (सं. ४—१—९) । त्वन्तरेति किम्? "अन्तरतरा तप्तव्रतः" (सं. ६—२—२) । "जनिष्वा हि जेन्यः" (सं. ४—१—३) । "युक्ष्वा हि देवहूतमान्" (सं. २—६—११) । "अच्छावोचो विदुष्टरः" (सं. २—६—११) ॥

### अधाऽग्नियाज्ये ॥ १० ॥

चार्थे द्वन्द्वसमासः । अग्निश्च याज्या[1] च अग्नियाज्ये, तस्मिन्नग्नियाज्ये । अधा इत्येतस्मिन् ग्रहणे व्यञ्जनपरः पदकाले ह्रस्वमापद्यते ।

---

1. "अग्निश्च याज्याश्च अग्नियाज्यम्, तस्मिन् । 'चार्थे द्वन्द्वः' (पा. २—२—२९) इति समासः" त्रि० ।

[1]अग्निरित्यग्निकाण्डस्याख्या । तत्र महापृष्ठं वर्जयित्वा "उभा वामिन्द्राग्नी" (सं. १—१—१४) इत्येवमादीनां प्रश्नोत्तमादीनामनुवाकानां यावत् "अग्निर्वृत्राणि" (सं. ४—३—१३) इति, "युक्ष्वा हि" (सं. २—६—११) इत्येतस्यानुवाकस्य च याज्येति संज्ञा भवति । यथा अग्निकाण्डे— "अधा ह्यग्नेः क्रतोः" (सं. ४—४—४) । याज्यायाः— "अधा ते सुम्नम्" (सं. २—६—११) । "अधा यथा नः" (सं. २—६—१२) । अग्नियाज्येति किमर्थम् ? "तत्प्रत्यगृण्हादधामेति" (सं. २—४—१२) ॥

कुत्रा दक्षिणेना स्वेना हन्तना जगामा रुहेमा विद्मऋध्यामा चकृमा क्षामा स्तरीमा भरेमा वर्षयथेरयथाऽऽरिथा पाथाऽथा सिश्चथा जनयथा जयतोक्षताऽवता याता शृणुता कृणुता बिभृता ॥ ११ ॥

इत्येतानि पदानि व्यञ्जनपराणि पदकाले ह्रस्वमापद्यन्ते । यथा— "कुत्रा चिद्यस्य" (सं. २—१—११) । "दक्षिणेना वसूनि" (सं. ३—४—११) । "स्वेना हि वृत्रम्" (सं. ७—४—१५) । "तपसा हन्तना तम्" (सं. ४—३—१३) । "आ जगामा परस्याः" (सं. १ ६—१२) । "आ रुहेमा स्वस्तये" (सं. १—५—११) । "विद्मा ते अग्ने" (सं. ४—२—२) । "ऋध्यामा त ओहैः" (सं. ४—४—४) । "चकृमा कच्चनागः" (सं. ४—७—१५) । "क्षामा भिन्दन्तः" (सं. २—६—१२) । "सुष्टरीमा जुषाणा" (सं. ५—१—११) । "प्र भरेमा मनीषाम्" (सं. १—६—१२) । "वर्षयथा पुरीषिणः", "उदीरयथा मरुतः" (सं. २—४—८) । "उदारिथा यजे" (सं. ४—६—५) । "पाथा दिवो वि महसः" (सं. ४—२—११) । "अथा सोमस्य" (सं. १—१—१४) । "सिश्चथा मधु" (सं. ३—१—११) । "जनयथा च नः" (सं. ४—१—५) । "उप प्रेत जयता नरः" (सं. ४—६—४) । "घृतमुक्षता मधुवर्णम्"

1. अग्निकाण्डश्चतुर्थः, तत्रैवाग्निप्रकाशकानां मन्त्राणां पठनात् ।

(सं. ४—३—१३)। "अवता हवेषु" (सं. ४—६—४)। "रथै-र्याता हिरण्ययैः" (सं. ४—७—१२)। "मरुतः शृणुता हवम्" (सं. ४—२—११)। "कृणुता बृहन्नमः" (सं. ५—७—२)। "बिभृतामुपस्थे" (सं. ४—६—६)॥

भरता याज्यासु ॥ १२ ॥

भरता इत्येतत्पदं याज्यासु व्यञ्जनपरो ह्रस्वमापद्यते। यथा—"भरता वसुवित्तमम्" (सं. ३—५—११)। याज्यास्विति किम्? "एष वो भरता राजा" (सं. १—८—१०)॥

अत्ता भवताऽनदता तरता तपता जुहुता वोचताऽमुञ्चता चृता घुष्या जनया वर्तया सादया पारया दीया हरा भराऽपाससादा सृजा तिष्ठा येना ॥ १३ ॥

अत्ताभवतादीनि पदानि व्यञ्जनपराणि विभागे ह्रस्वमापद्यन्ते। यथा—"अत्ता हवीँषि" (सं. २—६—१२)। "भवता मृडयन्तः" (सं. १—४—२२)। "अनदता हते" (सं. ५—६—१)। "रुह्राणास्तरता रजाँसि" (सं. ३—५—४)। "तपता सुवृक्तिभिः" (सं. १—६—१२)। "जुहुता विश्वकर्मणे" (सं. ४—६—२)। "अधि वोचता मे" (सं. ४—७—१४)। "पदि षितामसुञ्चता यजत्राः" (सं. ४—७—१५)। "वि चृता बन्धमेतम्" (सं. ४—२—५)। "अनुघुष्या वि शस्त" (सं. ४—६—९)। "जनया दैव्यम्" (सं. ३—४—२)। "आ वर्तया पुनः" (सं. ३—३—१०)। "सादया यज्ञं सुकृतस्य योनौ" (सं. ३—५—११)। "त्वं पारया नव्यः" (सं. १—१—१४)। "दीया रथेन" (सं. ४—६—४)। "हरा निह्वारम्" (सं. १—८—४)। "आ भरा दद्धि तन्नः" (सं. १—७—१३)। "श्रुत्या अपा वृधि" (सं. २—२—१२)। "निषसादा यजीयान्" (सं. १—३—१४)। "सृजा वृष्टिं दिवः" (सं. २—४—८)। "तिष्ठा देवो न" (सं. ४—१—४)। "येना सहस्रम्" (सं. ४—७—१३)॥

## [1]उश्मसी क्रयी कृधी श्रुधी यदी ॥ १४ ॥

उश्मस्यादिपदानि व्यञ्जनपराणि विभागे ह्रस्वमापद्यन्ते। यथा—"उश्मसी गमध्ये" (सं. १—३—६)। "क्रयी परं नाम" (सं. १—८—१४)। "कृधी स्वस्मान्" (सं. ४—७—१५)। "श्रुधी हवम्" (सं. २—१—११)। "यदी भूमिं जनयन्" (सं. ४—६—२)॥

## सू तू नू[2]मिथू मक्षू ऊ ॥ १५ ॥

स्वादीनि पदानि व्यञ्जनपराणि विभागे ह्रस्वमापद्यन्ते। यथा—"मोषूण इन्द्र" (सं. १—८—३)। "आ तू न उप गन्तन" (सं. १—५—११)। "एतशस्य नू रणे" (सं. ४—६—९)। "असिना मिथू कः" (सं. ४—६—७)। "मक्षू देववतः" (सं. १—८—२२)। "अस्माभिरू नु" (सं. १—४—३३)॥

## व्युत्पूर्व आननुदात्तोऽनूष्मवति ॥ १६ ॥

विपूर्वश्च उत्पूर्वश्च आनित्येष स्वरः अनुदात्तः संहितायां दीर्घः पदकाले ह्रस्वमापद्यते अनूष्मवति पदे। यथा—"व्यानायेति वि अनाय" (सं. ४—२—९)। "उदानायेत्युत् अनाय" (सं. ४—२—९)। व्युत्पूर्व इति किम्? "पर्याणीयाहवनीयस्य" (सं. ७—१—६)। आनिति किम्? "यद्रुक्मं व्याघारयति" (सं. ५—२—७)। "उदादाय पृथिवीम्" (सं. १—१—९)। अनुदात्त इति किम्? "नेष्टः पत्नीमुदानय" (सं. ६—५—८)। "व्यानट् तमग्ने" (सं. ४—२—१०)। अनूष्मवतीति किम्? "मधोर्धारा व्यानशुः" (सं. ५—७—७)। "उदानिषुर्महीरिति" (सं. ५—६—१)॥

इति तृतीयोऽध्यायः॥

---

1. इदमनन्तरसूत्रं चैकीकृत्यैकमेव सूत्रं दृश्यते. मु०।
2. "नू मक्षू" भू०।

## अथ चतुर्थोऽध्यायः ॥

**अथ प्रग्रहाः ॥ १ ॥**

अथेत्यधिकारः । प्रग्रहा इत्येतदधिकृतं वेदितव्यम् ॥

**नावग्रहः ॥ २ ॥**

न खल्ववग्रहः प्रग्रहो भवति । इहाप्राप्ते विधौ प्रतिषेधः "ऊकारः" (४—५) इति । उत्सर्गो वक्ष्यते "ओकारोऽसाँहितोऽकारव्यञ्जनपरः" (४—६) इति "अथेकारैकारौ" (४—८) इत्याधिकृत्य "अस्मे" (४—९), "त्वे इत्यनिङ्ग्यान्तः (४--१०), "अमी चक्षुषी०" (४ --१२) इत्येवमादीनां च ग्रहणं भविष्यति । "नानापदवदिङ्ग्यमसंख्याने" (१—४८), "तस्य पूर्वपदमवग्रहः" (१—४९) इति परिभाषाप्रामाण्याद-वग्रहाः पदान्तस्य नेकारस्य वा ओकारस्य वा (ईकारै ? औकारै)कारयोर्वा प्रग्रहत्वं कथं स्यादिति ? अत्राह—अपदार्थोऽयमादित एव प्रतिषेधः क्रियते । यथा ऊकारः—"तनूनप्त्रे त्वा" (सं. १—२—१०)। "तनूनपातम्" (सं. २—६—१)। ओकारः—"अगो अर्घ्यम्" (सं. ६—१—१०)। "अश्वेभ्यः" (सं. ४—५—३)। "गोपतौ" (सं. १—१—१)। एकारः—"द्वे द्वे इति" (सं. २—२—९)। ईकारः—"अग्नीषोमौ" (सं. २—५—२) ॥

**अन्तः ॥ ३ ॥**

[1]पदान्तस्य प्रग्रहो भवति । अत्राह—किं वा अपदान्तोऽपि स्यात् ? अत्रोच्यते—"ऊकारः" (४—५) इत्यविशेषेण विधानम्, "ओकारोऽसाँहित०" (४—६) इति, "ची यत्परः" (४—३३) इति च अपदान्तस्यापि ऊकारस्य वा ओकारस्य चीशब्दस्य यत्परस्य वा प्रग्रहत्वं स्यात्, तन्मा भूदिति इदं सूत्रम्। ननु[2] सिद्धान्त इत्येव (?)

1. पदान्तः प्रग्रहसंज्ञो भवतीत्यर्थः ।
2. "ननु सिद्धमेवैतत्" इति स्यात् ।

यथा तत् "अन्वादेशोऽन्त्यस्य" (१—५९) इति [1]वचनात् अनुक्ते वर्णसमुदायेप्यन्त्यत्वमुपपद्यते । ऊकार इत्येवमादय एकवर्णस्यैव निर्देशः[2] । ऊकारः—"ऊर्ध्वो भव प्रति" (सं. १—२—१४) । ओकारः— "ओषधीः" (सं. ४ —२—३) । चीशब्दः—"ऐक्षवी तिरश्ची यत्" (सं. ६—२—१) ॥

## इतिपरोऽपि ॥ ४ ॥

"अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु" (पा. १–४–९६) इति वचनात् अत्रापिशब्दः सम्भावनायां द्रष्टव्यः । यत्र [प्रग्रहणो यः कालन्नित्येतिपरन्तत्र स्यात् इति?] अथवा "चापीत्यन्वादेशकौ" (२२—५) इत्येव स्वशास्त्रन्यायेन । इतिपरतायामप्यनार्षक इतिकरणे प्रग्रहत्वमेवान्वादिश्यते[3] । यथा—" युग्मदयुजे" (सं. ५—४—८) इति ॥

## ऊकारः ॥ ५ ॥

ऊकारः पदान्ते वर्तमानः सर्वत्र प्रग्रहो भवति । यथा—"वासन्तिकावृतू" (सं. ४—४—११) । "हनू वा एते" (सं. ६—२—११) ॥

## ओकारोऽसाँहितोऽकारव्यञ्जनपरः ॥ ६ ॥

[4]असांहित ओकारः अकारपरो वा व्यञ्जनपरो वा प्रग्रहो भवति । यथा अकारपरः—"सहसोयहो। अस्मे" (सं. ४ —४—४) । व्यञ्जनपरः—"विष्णो हव्यं रक्षस्व" (सं. १—१—३) । "वायो शतं हरीणाम्" (सं. २—२—१२) । असांहित इति किम्? "सोऽर्कोऽभवत्"

---

1. वचनेन अन्त्यस्यैव कार्यनिर्वाहादित्यर्थः ।
2. अनेकवर्णसमुदाये ह्यन्त्यत्वमुपपन्नमिति शेषः ।
3. अपिशब्दः सिंहावलोकनेन "अथादावुत्तरे विभागे०" (३—१) इत्यत्र विभागपदमन्वादिशति । प्रग्रहो विभागे इतिशब्दपरोऽपि भवति ।
4. सँहितानिमित्तः साँहितः, न साँहितः असाँहितः ।

(सं. ५—४—३)। "अपशव्योऽपशुः" (सं. ६—३—३)। [1]अकार-व्यञ्जनपर इति किम्? "विष्णवे हीदम्" (सं. २—४—१२), "वायविष्टये दुरोणे" (सं. २- २—१२) ॥

### स म ह द थ पित्पूर्वश्च ॥ ७ ॥

असांहित एवोकारः स म ह द थ पित् इत्येवंपूर्वः अकारादन्यस्वरपरोऽपि प्रग्रहो भवति। यथा—"सो एवैषैतस्य" (सं. २—२—९)। "माऽरो मो एषाम्" (सं. ४—४—१०)। "उपहूतां हो इति" (सं. २—६—७)। "इन्दो इति" (सं. ६—५—८)। "तथो एवोत्तरे" (सं. ३—४—९)। "पितो आ विशस्व" (सं. ५—७—२)। पित् इति किम्? "शतक्रतवुद्वँशमिव" (सं. १—६—१२) ॥

### [2]अथेकारैकारौ ॥ ८ ॥

अथेत्याधिकारः। ईकारश्च एकारश्च प्रग्रहत्वेनाधिकृतावित्येतदधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

### अस्मे ॥ ९ ॥

अस्मे इत्येतत्पदं सर्वत्र प्रग्रहो भवति। यथा—"अस्मे रायः" (सं. १—२—५) ॥

### त्वे इत्यनिङ्ग्यान्तः ॥ १० ॥

प्रग्रहो भवति। यथा—"त्वे रायः" (सं. १—२—५)। "त्वे क्रतुम्" (सं. ३—५—१०)। [3]अनिंग्यान्त इति किम्? "अनागास्त्वे अदितित्वे" (सं. २—१—११) ॥

---

1 अकारश्च व्यञ्जनं च अकारव्यञ्जने, एते परे यस्मात्स तथोक्तः।

2 "अथैकारेकारौ" मु० । भू० ।

3. इंग्यस्यान्तः इंग्यान्तः, न इंग्यान्तः अनिंग्यान्तः।

देवते उभे भागधे ऊर्ध्वे विशाखे शृंगे मेध्ये एने तृण्णे तृद्ये कनीनिके पार्श्वे शिवे चोत्तमे एवोत्तरे शिप्रे रथन्तरे वत्सरस्यरूपे विरूपे विषुरूपे सदोहविर्धाने अधिषवणे अहोरात्रे धृतव्रते स्तुतशस्त्रे ऋक्सामे अक्ते अर्पिते रैवते पूर्ते प्रत्ते विधृते अनृते अछिद्रे बहुले पूर्वजे कृणुध्वँ सदने ॥ ११ ॥

इत्येतानि पदानि प्रग्रहाणि भवन्ति। यथा—" द्वे ह्येते देवते समृध्यै" (सं. २—१—९)। "उभे एव संवत्सरस्य" (सं. ७—५—१)। "भागधे भागधा अस्मै" (सं. २—५—६)। भागधे इति किम्? "अग्न उदधे" (सं. ५—५—९)। "ऊर्ध्वे समिधौ" (सं. २—६—६)। "विशाखे नक्षत्रम्" (सं. ४—४—१०)। विशाखे इति किम्? "तस्मिन् सहस्रशाखे" (तै. उ. १—४) इत्यन्यस्यां शाखायाम्। "शिशीते शृंगे" (सं. १—२—१४)। "मेध्ये एवैने" (सं. ६—२—९)। "असन्तृण्णे" (सं. ६—२—११)। "सन्तृद्ये धृत्यै" (सं. ६—२—११)। "कनीनिके अग्निष्टोमौ" (सं. ७—२—९)। "पार्श्वे परस्सामानः" (सं. ७—३—१०)। "शिवे नो द्यावापृथिवी" (सं. ४—६—६)। "विकर्णी चोत्तमे" (स. ५—३—७)। चोत्तमे इति किम्? "अस्माकं वीरा उत्तरे भवन्तु" (सं. ४—६—४)। "तथो एवोत्तरे निर्वपेत्" (सं. ३—४—९)। "शिप्रे अवेपयः" (सं. १—४—३०)। "यद् बृहद्रथन्तरे अन्वर्जेयुः" (सं. ७—५ ३)। "संवत्सरस्य रूपे आप्नुवन्ति" (सं. ७—५—१)। "विरूपे धापयेते" (सं. ४—१—१०)। "विषुरूपे अहनी द्यौः" (सं. ४—१—११)। वत्सरस्य रूपे विरूपे विषुरूपे इति किम्? "दश आ रूपे अन्नम्" (सं. ४—३—१३)। "सदोहविर्धाने एव सम्मिनोति"

(सं. २—५—५) । सदोहविर्धान इति किम्? "उपरवा हविर्द्धाने खायन्ते" (सं. ६—२—११) । "अहोरात्रे प्राविशन्" (सं. १—५—९) । अहोरात्र इति किम्? "अतिरात्रे पशुकामस्य" (सं. ६—६—११) । "हनू अधिषवणे जिह्वा" (सं. ६—२—११) । अधिषवण इति किम्? "माध्यन्दिन एव सवने" (सं. ३—२—९) । "धृतव्रते आविन्ना" (सं. १—८—१२) । धृतव्रत इति किम्? "यस्य व्रते पुष्टिपतिः" (सं. ३—१—११) । "स्तुतशस्त्रे एवैतेन" (सं. ५—६—८) । स्तुतशस्त्र इति किम्? "उक्थ्यशस्त्रे प्रतिनियमः" इत्यन्यस्यां शाखायाम् । "ऋक्सामे वै देवेभ्यः" (सं. ६—१—३) । ऋक्साम इति किम्? "शक्वरसामे" इत्यन्यस्यां शाखायाम् । "धृतेनाक्ते वृषणम्" (सं. १—३—७) । "द्यावापृथिवी भुवनेष्वर्पिते" (सं. ४—७—१३) । "शाक्वररैवते सामनी प्रतिष्ठित्यै" (सं. ४—४—२) । "इष्टापूर्ते संसृजेथाम्" (सं. ४—७—१३) । "प्रत्त काममन्नाद्यम्" (सं. ५—४—९) । "चक्षुषी विधृते सर्वतः" (सं. ६—४—१०) । विधृत इति किम्? "धृते मनन्ति" इत्यन्यस्यां शाखायाम् । "सत्यानृते अवपश्यन्" (सं. ५—६—१) । "अच्छिद्रे बहुले उभे" (सं. ४—१—३) । "प्रपूर्वजे पितरा" (सं. ४—१—११) । पूर्वज इति किम्? "प्रयाजे" (सं. २—३—२) । "गीर्भिः कृणुध्वँ सदने ऋतस्य" (सं. ४—१—११) । कृणुध्वं सदन इति किम्? "अर्णवे सदने सीद" (सं. ४—३—१) इति ॥

**अमी चक्षुषी कार्ष्णी देवताफल्गुनी मुष्टी[1]प्रधी नाभी वपाश्रपणी अहनी जन्मनी[2] सुम्निनी सामनी वैष्णवी ऐक्षवी दर्वी द्यावापृथिवी ॥ १२ ॥**

इत्येतानि पदानि प्रग्रह्याणि भवन्ति । यथा—"अमी वा इदम्" (सं. ३—३—७) । "चक्षुषी वा एते" (सं. २—६—२) । "कार्ष्णी

1. "ष्टी धी नाभी" मु० । भू० ।
2. "जननी" भू० ।

उपानहौ" (सं. ५–४–४)। "पितरो देवता फल्गुनी" (सं. ४—४—१०)। देवताफल्गुनी इति किम्? "यद्द्वितीयं सा फल्गुनी यत्तृतीयम्" (सं. २—१—२)। "मुष्टी करोति वाचम्" (सं. ५—२—१)। "प्रधीतावुक्थ्या मध्ये" (सं. ७—४—११)। "पौष्णौ रजतनाभी वैश्वदेवौ" (सं. ५—५—२४)। "वपाश्रपणी प्र हरति" (सं. ६—३—९)। वपाश्रपणी इति किम्? "स पशुश्रपणी" इत्यन्यस्यां शाखायाम्। "विषुरूपे अहनी द्यौः" (सं. ४–१–११)। "उभे निपासि जन्मनी" (सं. १–४–२२)। "सुम्नाय सुम्निनी" (सं. १—१—१३)। "सामनी प्रतिष्ठित्यै" (सं. ४—४—२)। "वैष्णवी रक्षोहणौ" (सं. १—३—२)। "ऐक्षवी तिरश्ची यदाश्ववालः" (सं. ६—२—१)। "दर्वी श्रीणीष आसनि" (सं. ४—४—४)। "द्यावापृथिवी एव स्वेन" (सं. २—१—४)। द्यावापृथिवीति किम्। "मही द्यौः पृथिवी" (सं. ३—३—१०)॥

पूर्वश्च ॥ १३ ॥

[1]द्यावापृथिवी इत्येतस्मात् पदात् यः पूर्वः पदान्त ईकार एकारो वा प्रग्रहो भवति। यथा—"आविन्ने द्यावापृथिवी" (सं. १—८—१२)॥

न रुन्धे नित्यम् ॥ १४ ॥

रुन्धे इत्येतत्पदं द्यावापृथिवी इत्येतस्मात्पूर्वं न प्रग्रहो भवति। यथा—"अवरुन्धे द्यावापृथिवी गच्छ" (सं. ६—४—१)। नित्यमिति किम्? [2]लक्षणान्तरप्राप्तस्यापि प्रतिषेध एव स्यादिति। यथा—"अव रुन्धे यदा सहस्रम्" (सं. २—१—५)॥

हरी सहुरी [3]सहूती कल्पयन्ती आपृषती आहुती ॥१५॥

---

1. द्यावापृथिवीति चकारेणान्वादिश्यते।
2. "नित्यशब्दः प्राप्त्यन्तरनिषेधार्थः" त्रि०।
3. "सहूरी क" भू०।

इत्येतानि पदानि प्रग्रहाणि भवन्ति । यथा—"इन्द्रमिद्धरी वहतः" (सं. १—४—३८) । "सहुरी" (सं. ४—२—११) । सहुरी इति किम्? "तमाहुरी" इत्यन्यस्यां शाखायाम् । "सहूती वनतं गिरः" (सं. २—३—१४) । सहूती इति किम् ? "हूती पुनर्जुहोति" इत्यन्यस्यां शाखायाम् । "कल्पयन्ती ऊर्ध्वं यज्ञम्" (सं.१ —२—१३)। "हरी ते युञ्जा पृषती" (सं. ४—६—९) । आपृषतीति किम् ? "पृषती स्थूलपृषती" (सं. ५—६—१२) । "पुरोडाशमेते आहुती" (सं. १—५—२) । आहुती इति किम् ? "ऊर्जा जुहोति तस्यां देवाः" इत्यन्यस्यां शाखायाम् ॥

पूर्वश्च ॥ १६ ॥

[1]आहुतीत्येतस्मात्पूर्व ईकार एकारो वा पदान्तः प्रग्रहो भवति । यथा—"पुरोडाशमेते आहुती" (सं. १—५—२) ॥

वाससी तपसी रोदसी ॥ १७ ॥

इत्येतानि पदानि प्रग्रहाणि भवन्ति । यथा—"वाससी इव विवसानौ" (सं. १—५—१०)। "अप्सु दीक्षातपसी" (सं. ६—१—१) । "इमे वै रोदसी" (सं. ५—१—५) ॥

परश्च ॥ १८ ॥

रोदसी[2] इत्येतस्मात् पदात्परः पदान्त ईकार एकारो वा प्रग्रहो भवति । "अन्विन्द्रँ रोदसी वावशाने" (सं. १—७—१३) ॥

व्यचस्वती [3]भरिष्यन्ती नःपृथिवी ॥ १९ ॥

---

1. आहुतीशब्दः चकारेणान्वादिश्यते ।
2. रोदसीशब्दः चकारेणान्वादिश्यते ।
3. "भविष्य" भू० ।

[1]इत्येतानि पदानि प्रग्रहाणि भवन्ति । यथा—" व्यचस्वती वसाथाम् " (सं. ४—१—३) । " अग्निमन्तर्भरिष्यन्ती " ४—१—३)। " द्यावा नः पृथिवी इमम् " (सं. ४—१—११)। पृथिवी इति किम् ? " विलिष्टं सूदयन्तु ते पृथिवी " . ५—२—१२) ॥

ये अप्रथेतामुर्वी ते अस्य यं क्रन्दसी छन्दस्वती ते चरन्ती अन्तरैतासु ॥ २० ॥

[2]एतासु ऋक्षु ईकार एकारो वा पदान्तः प्रग्रहो भवति । यथा— ये अप्रथेताममितेभिः " (सं. ४—७—१५) । अप्रथेतामिति किम् ? ये ते सरस्व ऊर्मयः " (सं. ३—१—११) । " उर्वी रोदसी वः " (सं. ४—७—१५) । " ते अस्य योषणे " (सं. ४—१—८) । येति किम् ? " ते नो अर्वन्तः " (सं. १—७—८) । " यं दसी अवसा " (सं. ४—१—८) । क्रन्दसीति किम् ? " यमग्ने मर्त्यम् " (सं. १—३—१३) । " छन्दस्वती उषसा " ४—३—११) । " ते आचरन्ती समना " (सं. ४—६—६) । चरन्तीति किम् ? " ते वर्द्धन्त " [अतमाहृदिति] (सं. ४—१—११) । न्तरा मित्रावरुणा चरन्ती " (सं. ५—१—११) ॥

नोपस्थे ॥ २१ ॥

उपस्थ इत्येतत्पदमेतास्वृक्षु प्रग्रहो न भवति । " मातेव पुत्रं भृतामुपस्थे " (सं. ४—६—६) ॥

इरावतीप्रभृत्यादाधार ॥ २२ ॥

---

1. इत्येतेषु पदेष्वन्त्यस्वरः प्रग्रहो भवतीत्यर्थः ।

2. ये अप्रथेताम्, उर्वी, ते अस्य, यं क्रन्दसी, छन्दस्वती, ते आचरन्ती, अन्तरा एतासु ऋक्षु इत्यर्थः ।

इरावती इत्येतस्मात्पदात् प्रभृति यावद् दाधार इति एतस्मिन्नन्तराल ईकार एकारो वा पदान्तः प्रग्रहो भवति । यथा—"इरावती धेनुमती" (सं. १—२—१३) । "रोदसी विष्णुरेते" (सं. १—२—१३) ॥

[1]पूर्वजे प्रभृत्याऽयम् ॥ २३ ॥

पूर्वजे इत्येतत्प्रभृति यावदयमित्यस्मिन्नन्तराले यत्पदमीकारान्तं एकारान्तं वा प्रग्रहो भवति । "पूर्वजे ऋतावरी इत्याह" (सं. २—६—७) । "देवी ह्येते देवपुत्रे" (सं. २—६—७) ॥

इमे गर्भमुपैवरसेनपरः ॥ २४ ॥

गर्भम्, उप, एवरसेन इत्येवम्पर इमे इति प्रग्रहो भवति । यथा— "यदिमे गर्भमदधाताम्" (सं. ३—४—३) । "यं वा इमे उपावर्त्स्यतः" (सं. ६—१—३) । "इमे एव रसेनानक्ति" (सं. ६—३—११) । एवरसेनेति किम् ? "इम एवास्मै लोकाः" (सं. २—४—१०) ॥

क्रूरमापस्सजूर्ब्रह्मजैतेषु च ॥ २५ ॥

क्रूरम्, आपो वरुणस्य, सजूशब्दः, ब्रह्मजज्ञानम् इत्येतेष्वनुवाकेषु इमे इत्येतत्पदं प्रग्रहो भवति । यथा—"क्रूरम्"(सं. ५—१—५) इत्येतस्मिन् । "इमे वै रोदसी" (सं. ५—१—५) । "आपो वरुणस्य" (सं.५—५—४) । "उपदधातीमे एवोपधत्ते" (सं. ५—५—४) । "सजूरब्दः" (सं. ५—६—४) । "इमे अश्विना संवत्सरः" (सं. ५—६—४) । "ब्रह्म जज्ञानम्" (सं. ५—२—७) । "इमे यजुषाऽऽप्तुमर्हति" (सं. ५—२—७) । ब्रह्मज इति किम् । "ब्रह्मवादिनो वदन्त्यद्भिः" (सं. २—६—५) । [नालेति यथा] "त्रेधानक्ति त्रय इमे" (सं. २—६—५) ॥

पूर्णे च ॥ २६ ॥

---

1. "जे यः" आ० ।

"अन्वादेशोऽन्त्यस्य" (१—५८) इति "ब्रह्मज" (सं. ५–२--६) इत्यस्यानुवाकस्य अन्वादेशः क्रियते। अस्मिन्ननुवाके पूर्णे इत्येतत्पदं प्रग्रहो भवति। "पूर्णे उपदधाति पूर्णे एवैनम्" (सं. ५—२—७)। अस्मिन्निति किम् ? "यो वै पूर्ण आ सिञ्चति" (सं. ७—५—६) ॥

दृढे ॥ २७ ॥

दृढे इत्येतत्पदं प्रग्रहं भवति । यथा—"पृथिवी च दृढे येन" (सं. ४—१—८) ॥

घ्नी चक्रे पपरे ॥ २८ ॥

घ्नी, चक्रे इत्येते पदे पपरे प्रग्रहे भवतः । यथा—"वार्त्रघ्नी पूर्णमासे" (सं. २—५—२) । "चक्रे पृष्ठानि यत्" (सं. ६—६—८) । पपर इति किम् । "वार्त्रघ्नीरूपम्" (सं. ७—१—६) । "समिधान चक्रे नीचा" (सं. १—२—१४) । घ्नीचक्र इति किम् ? "येषामीशे पशुपतिः" (सं. ३—१—४) । "अग्नये पवमानाय" (सं. २—२—४) ॥

न्वती ॥ २९ ॥

न्वती इति पदं प्रग्रहं भवति । यथा—"ओमन्वती तेऽस्मिन्" (सं. २—६—९) । "वृधन्वती अमावास्यायाम्" (सं. २—५—२) । न्वती इति किम् ? "कर्णकावती" (सं. ५—४—७) ॥

पपरो न ॥ ३० ॥

न खलु [1]न्वती पकारपरः प्रग्रहो भवति । यथा–"[2]मूर्धन्वती पुरोऽनुवाक्या" (सं. २—६—२) ॥

---

1. सान्निध्यात् न्वती इति लभ्यते ।
2. उदाहरणमिदं नास्ति । आ० ।

समीची ॥ ३१ ॥

समीची इत्येतत्पदं प्रग्रहं भवति । यथा—"समीची रेतः सिञ्चतः" (सं. ५—५—४) ॥

नपरो न ॥ ३२ ॥

न खलु समीची इति नकारपरः प्रग्रहो भवति । यथा—"समीची नामासि" (सं. ५—५—१०) ॥

ची यत्प्रपरः ॥ ३३ ॥

ची इति पदान्तः यत्परश्च प्रपरश्च प्रग्रहो भवति ! यथा—"ऐक्षवी तिरश्ची यत्" (सं. ६—२—१) । "तिरश्ची प्रजापतेः" (सं. ६—२—१) । "विषूची प्रहरति यत्" (सं. ६—३—९) । प्रपर इति किम्। "अग्ने यत्ते दिवि" (सं. ४—२—४) । "अग्ने प्रेहि प्रथमः" (सं. ४—६—५) । "तस्मात् सारस्वती यत्" (सं ३—४—३) ॥

आन्मही ॥ ३४ ॥

[1]आन्मही इति प्रग्रहो भवति । यथा—"महान् मही अस्तभायत्" (सं. २—३—१४) । आनिति किम्? "एक इन्मही" (सं. १—२—१३) ॥

पतीश्रुतिः[2] ॥ ३५ ॥

पती इति यत्र श्रूयते तत्र प्रग्रहो भवति । यथा—"नैका द्वौ

1. आन् इत्येताद्विशिष्टे महीग्रहणे अन्त्यस्वरः प्रग्रहो भवतीत्यर्थः ।

2. "श्रुती" आ० ।

पती विन्दते" (सं. ६—६—४)। श्रुतिरिति किम्? "इन्द्राबृहस्पती" (सं. ३—३—११)॥

ग्नी ॥ ३६ ॥

ग्नी इति पदान्तः प्रग्रहो भवति। यथा—"अन्तराऽग्नी पशूनाम्" (सं. १—६—७)॥

न हिपरः ॥ ३७ ॥

न खलु ग्नी इति हिपरः पदान्तः प्रग्रहो भवति। यथा—"ऐन्द्राग्नं हि बार्हस्पत्येति ब्रूयात्" (सं. ५—१—६)। हिपर इति किम्? "इन्द्राग्नी हवामहे" इत्यन्यस्यां शाखायाम्॥

वीड्द्वारौ कृष्णश्चरावोयदापरः ॥ ३८ ॥

वीट्, द्वारौ, कृष्णः, चरावः, यदा इत्येवम्पर ईकार एकारो वा पदान्तः प्रग्रहो भवति। यथा—"धिषणे वीडू सती" (सं. १—४—१)। वीडिति किम्। "आपश्च मे वीरुधश्च" (सं. ४—७—५)। "देवी द्वारौ मा मा" (सं. ३—२—४)। द्वाराविति किम्? "तानि द्वादशाहानि" (सं. ७—४—११)। "यज्ञायातिष्ठमाने कृष्णः" (सं. ६—१—३)। कृष्ण इति किम्? "चात्वाले कृष्णविषाणां प्रास्यति" (सं. ६—१—३)। "विवसानौ ये चरावः" (सं. १—५—१०)। "नन्नमाने यदेदन्ताः" (सं. ४—६—२)॥

न ज्ञे अह्ने नित्यम् ॥ ३९ ॥

ज्ञे अह्ने इत्येतौ प्रदान्तौ वीडादिपरावपि प्रग्रहौ न भवतः नित्यम्। यथा—"वरुणाय राज्ञे कृष्णः" (सं. ५—५—११)। "एण्य

ह्वे कृष्णः" (सं. ५—५—१५)। ज्ञे इत्यपदग्रहणं संक्षेपार्थम्। "यज्ञेऽपि कर्तोरिति तावब्रूताम्" (सं. २—६—७)। "[1]गमयतो भवतः" (४—५२) इत्यादिना प्राप्तिः प्रतिषिध्यते। नित्यमिति किम्? लक्षणान्तरप्राप्तयोः प्रतिषेध इति। यथा "सोमाय स्व०" (४—४८)। "स्वराज्ञेऽनो वाह्यौ" (सं. ५—६—२१)॥

## आकार एकारपूर्वस्तु बहुस्वरस्य तेथे ॥ ४० ॥

आकारपूर्वश्च एकारपूर्वश्च बहुस्वरस्य पदस्य[2] पदान्ते ते थे इति पदान्तौ प्रग्रहौ भवतः। यथा आकारपूर्वे—"मृजाते यो विद्विषाणयोः" (सं. २—२—६)। "विवा एतौ द्विषाते" (सं. ५—२—४) "पृथिव्या रिरिचाथे" (सं. ४—२—११)। एकारपूर्वे[3]— "शुक्रामन्थिनौ गृह्येते" (सं. ६—४—१०)। "दृंहणा यं नुदेथे" (सं. ४—७—१५)। आकारपूर्व इति किम्? "शरीरं वा एतद्यजमानः संस्कुरुते" (सं. ५—६—६)। "प्रवक्ष्यामो विदथे वीर्याणि" (सं. ४—६—८)। बहुस्वरस्येति किम्? "पुत्रे जाते यदष्टाकपालः" (सं. २—२—५)। ते थे इति किम्? "यत्समानेऽर्द्धमासे स्याताम्" (सं. ७—१—४)। [4]तुशब्दः अधस्तात् प्रतिषेधप्राप्तमिदानीं निवर्तयति। तुशब्दारम्भान्नित्यशब्दो प्रतिषेधे निवर्तत इत्येतज्ज्ञापयति॥

## न शार्य्याते ॥ ४१ ॥

न खलु शार्याते इत्येतत्पदं प्रग्रहं[5] भवति। यथा—"शार्याते

---

1. नित्यशब्दः प्राप्त्यन्तरप्रतिषेधप्रयोजकः। कथमित्याह—गमयत इत्यादि।
2. "दस्य ते" (?)
3. "पूर्वौ" आ०।
4. "वीड्" (४—३८) आदिनिमित्तसापेक्षतानिवर्तकः तुशब्द इति वररुचिपक्षः। माहिषेयपक्षस्तु वक्ष्यते— पूर्वसूत्रोक्तनिषेधं नित्यशब्दज्ञापितानुवृत्तिं निवारयतीति। तत्र वररुचिमतं रुचिरम्।" त्रि०।
5. पूर्वसूत्रेण प्राप्तिरिह निषिध्यते।

थपिबः" (सं. १—४—१८) ॥

## ते मापातं नम एनमभि वायुर्गर्भमुपा[1]हस्तुपरः॥ ४२॥

यथा—"मा पातमाऽस्य" (सं. १–२–२)। मापातमिति किम्? "ते माऽस्मिन् यज्ञे" (सं. ३—२—४)। "परि दधावहै पुनस्ते। नमोऽग्नये" (सं. १—५—१०)। "ते एनमभि समनह्येताम्" (सं. २—५—६)। एनमभीति किम्? "त एनं भिषज्यन्ति" (सं. २—३—११)। "ते वायुर्व्यवात्" (सं. ३—४—३)। "ते गर्भम्" (सं. ३—४—३)। "ते उपामन्त्रयन्त" (सं. ६—१—३)। "ते अहोरात्रयोः" (सं. ६—१—३)। "ते त्वाव नोत्सृज्ये" (सं. ७—५—७)। एवंपर इति किम्? "ते देवा अब्रुवन्" (सं. ६—२—४)। ते इति किम्? "बृहदुक्षे नमः" (सं. १—४—२६)। "अमुष्मिन् लोक उप शेरे" (सं. ५—३—७)। "यन्ति वा एते सवनाद्येऽहः" (सं. ७—५—६)॥

## अनुदात्तो न नित्यम्॥ ४३॥

ते इत्यनुदात्तः मापातामित्येवमादिपरोऽपि[2] न भवति प्रग्रहो नित्यम्। यथा—"बाहुभ्यामुत ते नमः" (सं. ४—५—१)। नित्यमिति किम्? लक्षणान्तरप्राप्तस्यापि प्रतिषेधः स्यादिति। यथा—"नमस्ते अस्त्वायुधाय" (सं. ४—५—१)। "गमयतो भवतः" (४—५२) इत्यादिना प्राप्तिः। "देवते उभे" इति देवताशब्दस्य स्वरूपग्रहणात् प्रग्रहत्वं प्राप्तम्। वसुमद्गणस्य सोमदेवते मतिविदः इत्यत एतेशब्दस्य स्वरूपग्रहणात् प्रग्रहो भवति। अनुदात्तो न भवति॥

---

1. "पास्तु" भू०। मापातम्, नमः, एनमभि, वायुः, गर्भम्, उप, अहः, तु इति विभागः।

2. "परमपि" आ०।

एते तनुवौ वैसमेव हि यज्ञ पदिष्टक्परः ॥ ४४ ॥

तनुवौ, वैसम्, एव, हि, यज्ञ, पत्, इष्टक्, इत्येवंपरः एते इति प्रग्रहो भवति । यथा—" एते तनुवौ घोरान्या " (सं. ५—७—३) । " एते वै संवत्सरस्य " (सं. २—५—६) । वैसमिति किम्? " एते वा इडायै " (सं. १—७—१) । " स एते एव नमस्यन् " (सं. २—५—६) । " एते हि देवानाम् " (सं. २—५—६) । "चक्षुषी वा एते यज्ञस्य" (सं. २—६—२) । "एते पदे अथो" (सं. ५—१—६) । "यदेते इष्टके उप दधाति" (सं. ५—३—५) । एवंपर इति किम्? "अथ कतम एते देवाः" (सं. २—६—९) । " यन्ति वा एते सवनात्" (सं. ७—५—६) । एते इति किम्? " मनुत एवैनमेतानि " (सं. ५—५—६) । "पुष्करपर्णे ह्येनम्" (सं. ५—१—४) । "अग्रे यज्ञपतिन्धत्त" (सं. १—१—५) । "सप्तमे पदे जुहोति" (सं. ६—१—८) ॥

परश्च द्वयोः ॥ ४५ ॥

चशब्द अन्वादेशकः । द्वयोरेतयोर्निमित्तनिमित्तिनोः पूर्वं तत्रोक्तयोरन्वादेशः क्रियते पत् इष्टक् इति । एतयोः पदान्त य एकारः स च प्रग्रहो भवति । अन्येभ्यस्त्वनन्तरा प्रग्रहभाङ् न सम्भवति (?) यथा—" एते पदे अथो प्रतिष्ठित्यै " (सं. ५—१—६) । " एते इष्टके उप दधाति " (सं. ५—३—५) । एतयोरन्वादेशः किम्? "सप्तमे पदे जुहोति " (सं. ६—१—८) । "तस्यास्ते देवीष्टके" (सं. ४—२—९) ॥

[1]स्थपरः ॥ ४६ ॥

स्थ इत्येवंपर ईकार एकारो वा प्रग्रहो भवति पदान्तः । यथा—" विष्णोः श्नप्त्रे स्थः " (सं. १—२—१३) ॥

---

1. "स्थ:प" मु० । भू० ।

परश्चोभयोः ॥ ४७ ॥

उभयोरेतयोः प्रग्रहस्थयोरन्वादेशः क्रियते । प्रग्रहस्थशब्दाच्च पर ईकार एकारो वा पदान्तः स च प्रग्रहो भवति । यथा--"शिल्पे स्थस्ते वामा रभे" (सं. १—२—२) । उभयोरिति किम्? "वृषणौ स्थ उर्वश्यसि" (सं. १---३---७) । "परश्च द्वयोः", "परश्चोभयोः" इति एतयोर्विषयभेदप्रदर्शनार्थमुभयग्रहणम् । पूर्वसूत्रेणोद्भावितयोर्निमित्तनिमित्तिनोरनन्तरः प्रग्रहो भवत्यनेन इति विषयभेदः । अत एव तयोर्विभागः क्रियते ॥

सोमाय स्वैतस्मिन् ॥ ४८ ॥

"सोमाय स्वराज्ञे" (सं. ५—६—२१) इत्येतस्मिन्ननुवाके यत्पदमीकारान्तं एकारान्तं वा प्रग्रहं भवति । यथा--"सीरवाहाववी द्वे" (सं. ५—६—२१) । "वारुणी कृष्णे वशे" (सं. ५—६—२१) । सोमाय स्वेति किमर्थम्? "सोमाय पितृमते" (सं. १—८—५) इत्यत्र मा भूदिति । यथा—"अभिवान्यायै दुग्धे मन्थम्" (सं. १—८—५) ॥

द्वे ॥ ४९ ॥

द्वे इत्येतत्पदं प्रग्रहं भवति । यथा—"द्वे यजेत" (सं. २–५–५) । "द्वे नश्येताम्" (सं. २—६—३) इति ॥

परश्च ॥ ५० ॥

द्वे इत्येतस्मात्पदाद्यः पर ईकार एकारो वा पदान्तः स च प्रग्रहो भवति । यथा—"द्वे शुक्ले द्वे कृष्णे" (सं. ५—३—१) ॥

एकव्यवेतोऽपि ॥ ५१ ॥

एकेनापि पदेन व्यवेतः द्वे इत्येतस्मात्परः पदान्त ईकार एकारो वा प्रग्रहो भवति । यथा—" द्वे वाव देवसत्ते " (सं. ७—४—५) । एवमारभ्यमाणे अल्पाक्षरं सूत्रं भवति । उक्तं शाखान्तरे—

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
निर्दोषं हेतुयुक्तार्थं सूत्रं सूत्रविदो विदुः ॥

इति । अत्रोच्यते—एकशब्दं प्रत्याख्याय व्यवेतोऽपि इत्येवमारभ्यमाणे अविशेषविधानादनेकेनापि पदेन व्यवहितं प्रग्रहं भवति । तन्मा भूदिति एवमारभ्यते—एकव्यवेतोऽपीति ॥

गमयतो भवतोऽ[1]नूकारात्परं तनू[2] यदकरोत् कुर्या-दिष्टिष्वब्रूतां प्रवर्त्त[3] आस्तां स्तभ्नीतां वाचयति [4]बिभृतस्ता-ग्निं गायत्रं [5]ताभ्यामेवोभाभ्यामवान्तरं[6] पर आ षष्ठात् ॥ ५२ ॥

गमयतः, भवतः इत्येतत् न चेदूकारात्परम्; तनूयत्, अकरोत्, कुर्यात् इत्येतदिष्टिषु ; इष्टिर्नाम दशमादयस्त्रयः प्रश्नाः उत्तमानुवाकादर्वाक्; अब्रूताम्, प्रवर्त, आस्ताम्, स्तभ्नीताम्, वाचयति, विभृतस्त, अग्निं गाय-त्रम्, ताभ्यामेव, उभाभ्याम्, अवान्तरम्, इत्येतेषु पदेषु परेषु आषष्ठात् पदात् पूर्वो वर्तमान ईकार एकारो वा पदान्तः प्रग्रहो भवति । यथा—" एवैनं प्रतिष्ठां

---

1. "तो नोका" आ० ।
2. "परस्तनू" आ० ।
3. "वर्तास्तां " मु० । भू० ।
4. "ति भिभृ " मु० ।
5. "तामेवो " भू० ।
6. "न्तर : पर " आ० । " परस्ताष " भू० । पर आ षष्ठादिति अभिविधावयमाकारः ।

गमयतः" (सं. २—१—४)। "उत्तरावती भवतः" (सं. ५-४-८)। नोकारात्परमिति किम्? "दीक्षन्तेऽन्तनामानावृतू भवतः" (सं. ७-४-८)। "महायज्ञस्यान्त्ये तनू यत्" (सं. २—२—७)। तनूयदिति किम्? "परिपतये त्वा गृण्हामि तनूनप्त्रे त्वा" (सं. १—२—१०)। "शक्वरी याज्यानुवाक्ये अकरोत्" (सं. २—२—८)। "मानवी ऋचौ धाय्ये कुर्यात्" (सं. २—२—१०)। इष्टिष्विति किम्? "दात्रे पुरोडाशमष्टाकपालं कुर्यात्" (सं. २—५—५)। "ते अब्रूतां द्यावापृथिवी" (सं. २—५—२)। "हविर्द्धाने प्राची प्रवर्तयेयुः" (सं. ३—१—३)। प्रवर्त्त इति किम्? "तेऽदित्याँ समभ्रियन्त त्वया प्र जानाम" (सं. ६—१—५)। "इमे वै सहास्ताम्" (सं. ३—४—३)। "अव्यथयन्ती स्तभ्नीताम्" (सं. ४—४—२)। "औदुम्बरी वाचयति" (सं. ५—१—१०)। "ते एव यजमानस्य रेतो बिभृतस्तस्मात्" (सं. ५—६—८)। बिभृतस्तेति किम्? "मन्महे यावात्मन्वद् बिभृतः" (सं. ४—७—१५)। "अग्निं गायत्रम्" (सं. ६—३—५)। अग्निं गायत्रमिति किम्? "सधस्थेऽग्निम्" (सं. ४—१—३)। "अञ्जसायनी स्रुती ताभ्यामेव" (सं. ७—२—१)। ताभ्यामेवेति किम्? "अपहँस्यग्ने। ताभ्यां पतेम" (सं. ४—७—१३)। "अहोरात्रे एव ते उभाभ्याम्" (सं. ७—४—४)। "आहुर्ये अवान्तरम्" (सं. ७-५-७)। [1]अवान्तरमिति किम्? "आप्यायस्व सं तेऽव ते" (सं. २—५—१२)॥

न ग्रामी वर्चसी मिथुनी मासे लोके धत्ते ॥ ५३ ॥

ग्रामी इत्येवमादीनि, पराण्यपि प्रग्रहाणि न भवन्ति। यथा— "ग्राम्येव भवति गणवती याज्यानुवाक्ये भवतः" (सं. २—३—३)। "ब्रह्मवर्चस्येव भवत्युभयतो रुक्मौ भवतः" (सं. २—३—२)। "अथ मिथुनी भवतः" (सं. ६—५—८)। "पूर्णमासे प्रायच्छत्तावब्रूताम्"

1. "अन्त" आ०।

(सं. २—५—२)। "लोके प्रतितिष्ठन्तो यन्ति द्वौ षडहौ भवतः" (सं. ७—४—११)। "ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतः" (सं. २—६—२)॥

## अते समानपदे नित्यमवे[1] चावे च ॥ ५४ ॥

अते, अवे इत्येतावेकारौ पदान्तौ पूर्वेण अकारेण सह समानपदस्थौ न प्रग्रहौ भवतः। नेतिशब्दोऽन्वादिश्यते। यथा —"अवरुन्धतेऽतिरात्रावभितो भवतः" (सं. ७—२—६)। "अनातताय धृष्णवे। उभाभ्याम्" (सं. ४—५—१)। समानपद इति किम्? "पुनरभ्यायत ते अब्रूताम्" (सं. २—५—२)। नित्यमिति किमर्थम्? लक्षणान्तरप्राप्तयोरपि प्रतिषेधः स्यादिति। यथा—"द्वे जाये विन्दते" (सं. ६—६—४)। "वनस्पते वीड्वंगो हि" (सं. ४—६—६)। "मनवे यशस्ये" (सं. १—२—१३)। "वायव आरोहणवाहौ" (सं. ५—६—२१)॥

इति प्रातिशाख्यव्याख्यायां छन्दोभाषाख्यायां

चतुर्थोऽध्यायः॥

———



1. "अवे च" इदं पृथक्सूत्रं वैदिकाभरणमनुसृत्य।

अथ पञ्चमोऽध्यायः ।

## अथ सँहितायामेकप्राणभावे ॥ १ ॥

अथेत्यधिकारः । संहितायामेकप्राणभाव इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः । एकस्य प्राणभावः एकप्राणभावः, यावदेकोछ्वासेनोच्चार्यते तावत्संहिताविधिः । इत उत्तरं यद्वक्ष्यामः तदवसाने पदविधिरिति । अत्राह—अथ संहितायामिति अथैकप्राण इति वा उभयारम्भेण किं प्रयोजनम् ? अत्रोच्यते—एकप्राणभाव इत्यनारभ्यमाणे संहिताविधिप्रवृत्तस्य पदावसानत्वं नेष्यते । अत्रापि संहितायामित्येवं नारभ्यते पदेष्वप्येकप्राणभाव इत्युपपद्यते । अत्र सन्देह एव स्यात् । तस्मादुभयारम्भः क्रियते । संहितेति कोऽर्थः ? "नानापदसन्धानसंयोगः पदसहितेत्यभिधीयते" (२४—३) । "परः सन्निकर्षः संहिता" (पाणिनिसू०. १—४—१०९) इति वैयाकरणाः ॥

## यथायुक्ताद्विधिः सा प्रकृतिः ॥ २ ॥

यथायुक्तात्पदविधेः तथा संहिताविधिर्भवति । अविकारेण सा प्रकृतिसंहितेत्युच्यते । यथा—"स्वधा अस्युर्वीचासि" (सं. १—१—९) । "प्र बुध्निया ईरते" (सं. ४—३—१३) । "श्येती अकुरुत" (सं. ५—५—८) ॥

## तत्र पूर्वं पूर्वं प्रथमम्[1] ॥ ३ ॥

तत्र संहिताविधाने यद्यत्पूर्वं तत्तत्प्रथमं सन्धेयं भवति । पूर्वपदेनो-

---

1. " तत्र तत्र पूर्वः पूर्वः प्रथमः " आ० ।

त्तरं द्विपदं सन्दध्यात् । तत्संहितान्तरमुपपद्यते । यथा—"भक्षेहि[1]" (सं. ३—२—५) । "त्वं वेद" (सं. १—६—११) । "उदु त्यं जातवेदसम्" (सं. १—४—४३) इत्यत्र यथाविकृतौ उत् इति स्थिते वकारागमः एकादेशश्च, विधिप्रकृतौ सावकाशत्वादन्योन्यप्रतिषेधेन नैव प्राप्नुत इति विप्रतिषेधे पूर्वं कार्यम्, यथा वैयाकरणानां विप्रतिषेधे परं कार्यम् ॥

## त्रपुमिथुपूर्वः शकारश्चपरः ॥ ४ ॥

त्रपु, मिथु इत्येवंपूर्वः शकार आगमो भवति चकारपरः । यथा— "त्रपुश्च मे" (सं. ४—७—५) । "मिथुश्चरन्तम्" (सं. ४–७–१५) । त्रपुमिथुपूर्व इति किम् ? "य उ चैना एवं वेद" (सं. ५—६—२) ॥

## सुपूर्वश्च चन्द्रपरः ॥ ५ ॥

सुपूर्वः शकार आगमो भवति चन्द्रपरः । यथा—"सुश्चन्द्र दस्म" (सं. ४—४—४) । सुश्चन्द्रेति प्राप्ते । सुपूर्व इति किम् ? "स नो रासच्छुरुधश्चन्द्राग्राः" (सं. १—१—१४) । चन्द्रपर इति किम् ? "आ मा सुचरिते" (सं. १—१—१२) ॥

## सम्पूर्वः सकारः कुरुपरः ॥ ६ ॥

समित्येवंपूर्वः सकारः कुरुपर आगमो भवति । "शरीरं वा एतद्यजमानः सँस्कुरुते" ( सं ५–६–६) । "मकारः स्पर्शपरस्तस्य सस्थानमनुनासिकम्" (५—२७) इति संकुरुत इति प्राप्ते । सम्पूर्व इति किम् ? "संक्रन्दनोऽनिमिषः" (सं. ४—६—४) ॥

## अकुर्वे च प्रत्ययात्परः ॥ ७ ॥

---

1. भक्ष आ इहि > भक्षा इहि ( १०—२ सूत्रेण दीर्घः ), भक्षा इहि > भक्षेहि( १०—४ सूत्रेण एकारः) ।

"अडभ्यासव्यवायेऽपि" (वार्तिकम्) इति सुट् कात्पूर्वो भवति। "अकुर्वत" इत्येतस्मिन् सकार आगमो भवति, प्रत्ययात्परः अकारादित्यर्थः। केन व्यञ्जनानि [1]प्रत्याय्यन्ते ? सम्पूर्व इति चकारो ज्ञापयति । यथा— "इषुँ समस्कुर्वत" (सं. ६–२–३) इति समस्कुर्वतेति प्राप्ते। सम्पूर्व इति किमर्थम् ? "अग्निहोत्रं व्रतमकुर्वत" (सं. ३—२—२)। तस्मात्प्रत्ययात्पर इति किम् ? सँकुर्वतेति मा भूदिति ॥

## नीचापूर्वो दकार उच्चापरः ॥ ८ ॥

नीचा इत्येवंपूर्वो दकार आगमो भवति उच्चापरः। "मध्यान्नी-चादुच्चा" (सं. २—३—१४) । "उवर्णपर ओकारम्" (१०—५) इति नीचो [तेच्च] त्येवं प्राप्ते । नीचापूर्व इति किम् ? "लोकं यन्त्युच्चावचान्" (सं. ७—४—३) । उच्चापर इति किम् ? "नीचा यच्छ पृतन्यतः" (सं. १—६—१२) ॥

## असम्पूर्वोऽरमृकारः ॥ ९ ॥

असमित्येवंपूर्वः ऋकारः अरं विकारमापद्यते। यथा—"यतया समर्च्छते" (सं. ३—२—९)। ऋकार इति किम् ? "असन्तृण्णे हि हनू" (सं. ६—२—११) ॥

## अवग्रह आशीर्धूस्सुवरिति [2]रेफं परः सकारः [3]षकारम् ॥ १० ॥

---

1. "प्रत्याय्यन्ते अभिव्यज्यन्ते व्यञ्जनान्यनेनेति प्रत्ययः" इति स्यात्।
2. "'रेफपरः' आ०"।
3. "रः" आ०।

आशीः, धूः, सुवः इत्येतेषु ग्रहणेषु अवग्रहे विसर्जनीयो रेफमापद्यते, परश्च सकारः षकारमापद्यते। यथा—"आशीर्॒पदयर्चा" (सं. ६—२—९)। "कखपकारपरः षमकारपूर्वः समवग्रहः" (८—२२) इति आशीष्पदया इत्येवंप्राप्ते। "उस्रावेतं धूर्॒षाहौ" (सं. १-२-८)। "सुवर्॒षां जिह्वामग्ने" (सं. ४—४—४)। "अघोषपरस्तस्य सस्थानमूष्माणम्" (९—२) इत्यत्र सत्वे प्राप्ते। अवग्रह इति किम्? "देवसुवस्स्थ ते" (सं. १-८-१०)॥

## अथ लोपः ॥ ११ ॥

अथेत्यधिकारः[1]। लोप इत्येतदधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः॥

## ईंपूर्वो मकारः ॥ १२ ॥

ईमित्येवंपूर्वो मकारः लोपमापद्यते। यथा—"स ईं मन्द्रासु" (सं. ४—१—८)। ईंपूर्व इति किम्? "इमं मे वरुण" (सं. २-१-११)। मकार इति किम्? "अधस्पदं तमीं कृधि" (सं. १—६—१२)॥

## तुनुपूर्व उदात्तयोर्वकारः ॥ १३ ॥

तु नु इत्येवंपूर्वो वकारो लोपमापद्यते उदात्तयोस्तुन्वोः। यथा—"स त्वै दर्शपूर्णमासौ" (सं. २—५—४)। "स इन्वै तमुपार्च्छति" (सं. १—५—९)। तुनुपूर्व इति किम्? "अप्सु वै वरुणः" (सं. २—३—१२)। उदात्तयोरिति किम्? "अनु वासि रात्रियै त्वा" (सं. ४-४-१)। वकार इति किम्? "भूय इन्नु ते" (सं. १-४ २२)॥

## उत्पूर्वः सकारो व्यञ्जनपरः ॥ १४ ॥

---

1. अयमधिकारः "तिष्ठन्त्येकया०" (५—१७) इति सूत्रपर्यन्तो ज्ञेयः।

उत् इत्येवंपूर्वः सकारः लोपमापद्यते व्यञ्जनपरः[1]। यथा—"उत्था स्यते" (सं. ७—१—१९)। "दिवमुत्तभान" (सं. ४–६–५)। उत्पूर्व इति किम्? "आदित्यासो जगत्स्थाः" (सं. २—१—११)। सकार इति किम्? "उत्क्रँस्यते" (सं. ७—१—१९)। व्यञ्जनपर इति किम्? "शर्करामुत्सादेन" (सं. ५—७—११)॥

एष स स्य [2]इति च ॥ १५ ॥

एषः, सः, स्यः, इत्येतेषु ग्रहणेषु विसर्जनीयो लोपमापद्यते। व्यञ्जनपर इति चकारो ज्ञापयति। यथा—"एष ते गायत्रः" (सं. ३—१—२)। "अघोषपरस्तस्य सस्थानमूष्माणम्" (९—२) इति "एषस्ते गायत्र" इति प्राप्ते। "एष वै देवरथः" (सं. २—५—६)। "ओकारमः सर्वोऽकारपरः" (९—७), "घोषवत्परश्च" (९—८) इति एषो वा इति प्राप्ते। "स ते जानाति" (सं. १—२—१४)। "अघोषपर०" (९—२) इत्यादिना सत्वे प्राप्ते अनेन लोपो विधीयते। "एष स्य वाजी" (सं. १—७—८)। "अघोषपर०" (९—२) इत्यादिना उपध्मानीये प्राप्ते। व्यञ्जनपर इति किम्? "परा वा एषोऽग्निं वपति" (सं. ५—२—२)। "सोऽमुं लोकं गत्वा" (सं. १—५—९)। "इत्थं वाव स्य आर्त्तिम्") सं. २—६—८)॥

नासः ॥ १६ ॥

नेति प्रतिषेधः। अस इत्येतस्मिन् ग्रहणे न खलु विसर्जनीयो लोपमापद्यते। यथा—"हृत्स्वसो मयोभून्यः" (सं. ४—२—११)। अस इत्येतस्मिन् ग्रहणे व्यञ्जनपरस्य विसर्जनीयस्य लोपे प्राप्ते "अप्यकारादि" (१—५२) वचनात् प्रतिषेधः क्रियते॥

---

1. व्यञ्जनमस्मात् परमिति व्यञ्जनपरः। व्याकरणे "उदस्थास्तम्भ्वोः पूर्वस्य" (पा. सू.) इति स्थास्तम्भ्वोरेव सकारस्य पूर्वसवर्णादेशपूर्वको लोपः स्मर्यते। अत्र तु व्यञ्जनपर इति सामान्योक्त्या ततोऽन्यत्रापि लोपो भवति। यथा— "पुनरुत्स्यूतं वासः" (सं. १—५—२)।

2. "इति।" आ०।

## इद्विदग्न इमान्न एनौषधीः[1] पार्श्वम् ॥ १७ ॥

इदु, इदग्ने, इमान्नः, एना, ओषधीः, इत्येवंपरो विसर्जनीयो लोपमापद्यते । स इत्येतस्मिन्निति चकारो ज्ञापयति । यथा—"यजात्सेदु होता" (स. १—१—१४)। "सेदग्ने अस्तु" (सं. १—२—१४) । इद्विदग्न इति किम्? "स इद्देवेषु गच्छति" (सं. ४—१—११)। "सेमां नो हव्यदातिं जुषाणः" (सं. ४—६—६)। इमान्न इति किम्? "स इमामपश्यत्ताम्" (सं. ७—१—५)। "सैनाऽनीकेन सुविदत्रः" (सं. ४—३—१३)। "सौषधीरनु रुध्यसे" (सं. ४—२—३)। स इत्येतस्मिन्निति किम्? "परो दिवा पर एना" (सं. ४—६—२)॥

## अवग्रह इत्येकम् ॥ १८ ॥

इतिशब्दविशिष्ट एकमित्येष अवग्रहो लोपमापद्यते । "वर्णस्य विकारलोपौ" (१—५७) इति मकारः[2]। "पापीयान् स्यादित्येकैकं तस्य" (सं. ५—१—१) । इत्येकमिति किम्? "यदेकमेकँ संभरेत्" (सं. १—६—८)। अवग्रह इति किम्? "इत्येकमग्रेऽथ द्वावथ त्रीन्" (सं. ६—२—३)। एकमेकमिति प्राप्ते ॥

## तिष्ठन्त्येकया सपूर्वः[3] ॥ १९ ॥

तिष्ठन्त्येकया इत्यस्मिन् ग्रहणे पूर्वेण यकारेण सह अन्त्य अकारो लोपमापद्यते। "प्रति तिष्ठन्त्येकैकयाऽस्तुतया" (सं. ७—५—८) ।

---

1. "धीः परस्सः" मु० । भू० । अस्मिन् सूत्रे 'पार्श्वे' इति पदं लेखकप्रमादप्रक्षिप्तम्। 'परःसः' इत्ययमपि पाठो न माहिषेयसम्मतः। "स इत्येतस्मिन्निति चकारो ज्ञापयति" इत्युक्तत्वात्। इतश्च, सूत्रे चकारसत्ता, सकाराभावश्चावगम्यते। परशब्दश्चात्यन्तापेक्षितः । एवं च माहिषेयसम्मतः पाठः एवं स्यात्—" ०धीः परश्च" इति ।

2. लुप्यत इति शेषः।

3. सपूर्वः पूर्ववर्णसहितः। एकया इत्यत्र अन्त्यस्याकारस्य पूर्वो वर्णः यकारस्तत्सहित इति यावत्।

तिष्ठन्त्येकयेति किम् ? "एकयैकयोत्सर्गम्" (सं. ६—१—९)। तिष्ठन्त्येकयैकयेति प्राप्ते ॥

नकारः शकारं चपरः ॥ २० ॥

नकारः शकारमापद्यते चपरः। यथा—"अहीँश्च सर्वाञ्जम्भयन्" (सं. ४—५—१)। "ऋतूँश्च" (सं. ७—१—३)। नकार इति किम्? "शञ्च मे" (सं. ४—७—३)। चपर इति किम्? "ताञ्छन्दोभिरन्वविन्दत्" (सं. १—५—९)॥

[1]नायन्नैरयन्नार्ध्नुवन्ननड्वान् घृणीवान् वारुणानेवास्मिन् ॥ २१ ॥

इत्येतेषु ग्रहणेषु न खलु नकारः शकारमापद्यते। यथा "सुवर्गं लोकमायन् चतस्रः" (सं. ५—२—३)। "यामैरयश्चन्द्रमसि" (सं १—१—९)। "आर्ध्नुवञ्चरुणाऽस्मिन्" (सं. ५—५—१)। "अनड्वाञ्च मे" (सं. ४—७—१०)। "घृणीवाञ्चेतति" (सं. ३—५—११)। "वारुणाञ्चतुष्कपालान्" (सं. २—३—१२)। "एवास्मिञ्चक्षुर्धत्तः" (सं. २—२—९)। एवास्मिन्निति किम्? "अस्मिँश्चामुष्मिँश्च" (सं. ७—३—४) इति ॥

तकारश्चकारँ शचछपरः ॥ २२ ॥

तकारः चकारमापद्यते शकारचकारछकारपरः। यथा—"तच्छंयोरावृणीमहे" (सं. २—६—१०)। "तच्चादद्दुः" (सं. ७—१—५)। "आच्छच्छन्दः" (सं. ४—३—१२)। शछपर इति किम्? "तदन्तरिक्षम्" (सं. ७ १—५)। "तत्सवितुः" (सं. ४—१—११) इति ॥

जपरो जकारम् ॥ २३ ॥

---

1. न, आयन्, ऐरयन्, आर्ध्नुवन्, अनड्वान्, घृणीवान्, वारुणान्, एवास्मिन्, इति च्छेदः।

जकारपरस्तकारो जकारमापद्यते । यथा—"तज्जयानां जय त्वम्" (सं. ३—४—४)। "उज्जितिमनु" (सं. १—६—४)। जपर इति किम्? "अग्निर्मूर्धा दिवः ककुत्पतिः" (सं. ४—४—४)॥

नकार एतेषु ञकारम् ॥ २४ ॥

नकार एतेषु शचछजेषु परेषु ञकारमापद्यते । यथा—"पशूञ्शुचार्पयति" (सं. ५—१—४)। "अनड्वाञ्च मे" (सं. ४–७–१०)। "ताञ्छन्दोभिः" (सं. १–५–९)। "तस्मा एताञ्जयान्" (सं. ३–४–४)। एतेष्विति किम्? "विद्वान् सोमेन" (सं. ३—२—२)॥

लपरौ लकारम् ॥ २५ ॥

लकारपरौ नकारतकारौ लकारमापद्येते । यथा—"+ + +नाम" (?) + + +। "अस्मिँल्लोके" (सं. १—५—६)। लपराविति किम्? "तत्सवितुः" (सं. ४—१—११)। "विद्वान् सोमेन "(सं. ३–२–२)॥

नकारोऽनुनासिकम् ॥ २६ ॥

नकारो लकारपरोऽनुनासिकं विकारमापद्यते[1]। एतदेवोदाहरणं भवति— "अस्मिँल्लोके" (सं. १—५—६)॥

मकारस्स्पर्शपरस्तस्य सस्थानमनुनासिकम् ॥ २७ ॥

स्पर्शपरो मकारस्तस्य स्पर्शस्य सस्थानमनुनासिकं आपद्यते । यथा— "यङ्कामयेत" (सं. १—६—१०)। "शञ्च मे" (सं. ४—७—३)। "तन्ते दुश्चक्षाः" (सं. ३—२—१०)॥

अन्तस्थापरश्च सवर्णमनुनासिकम् ॥ २८ ॥

---

[1]. "अनुस्वारोत्तमा अनुनासिकाः" (२—३०) इति सूत्रेणैव नकारस्यानुनासिकत्वं सिद्धम्। तस्मादत्र लक्षणया नकारः इत्यस्य तत्स्थानो लकारः इत्यर्थः।

अन्तस्थापरो मकारः अन्तस्थायाः सवर्णं रूपमनुनासिकमापद्यते। यथा—"सय्ँयत्ता आसन्" (सं. १—५—१)। "सोऽमुँल्लोकम्" (सं. १—५—९)। "सँव्वथ्सरमुख्यम्" (सं. ५—६—५)। चशब्दो मकार इति ज्ञापयति ॥

न रेफपरः ॥ २९ ॥

रेफपरो मकारो न खलु सवर्णमनुनासिकमापद्यते[1]। यथा "सम्राडसि भ्रातृव्यहा" (सं. १—३—२) ॥

यवकारपरश्चैकेषामाचार्याणाम् ॥ ३० ॥

यवकारपरो रेफपरश्च न खलु सवर्णमनुनासिकमापद्यते। यथा—"पृथ्वीं याहि" (सं. १—२—१४)। "संवथ्सरः" (सं. १—५—१)। "इषां रयीणाम्" (सं. १—१—१४) ॥

उत्तमलभावात् पूर्वोऽनुनासिक इत्यात्रेयः ॥ ३१ ॥

उत्तमस्य नकारस्य मकारस्य वा लभावात्[2] पूर्वस्वरोऽनुनासिकमापद्यते; आत्रेयस्य मतम्। यथा—"इमाँल्लोकान्" (सं. ३—३—६)। मकारस्य—"सुकृताँल्लोके सीदत" (सं. १—४—४३)। उत्तमलभावादिति किम्? "आदित्यो वा अस्माल्लोकात्" (सं. १—५—९) ॥

ङपूर्वः ककारः सषकारपरः ॥ ३२ ॥

ङकारपूर्वः ककार आगमो भवति सकारपरः षकारपरः। यथा—"प्रत्यङ्क्सोमो अतिद्रुतः" (सं. १—८—२१)। षकारपरः—"प्रत्यङ्क् षडहो भवति" (सं. ७—४—२)। ङपूर्वः ककारः ऊष्मपरः

---

1. अन्तस्थत्वाद्रेफस्य तत्परस्यापि मकारस्य तत्सवर्णानुनासिकापत्तिः प्राप्ता अनेन प्रतिषिध्यते।

2. लभावात् लकारापत्तेरित्यर्थः।

इत्येवमारब्धव्यम् । किमर्थम् ? लघ्वर्थम् । अत्रोच्यते—ऊष्मपर इत्येवमारभ्यमाणे अविशेषविधानात् अन्यस्मिन्नूष्मणि परे ङपूर्वः ककार आगमः स्यात् । तन्मा भूदिति एवमारभ्यते सषकारपर इति । यथा—"प्रत्यङ्क्होतारमतिसर्पेत्" (सं. ६—३—१) । ङपूर्व इति किम् ? "विद्वान् सप्तरात्रेण" (सं. ७—२—२) ॥

## टनकारपूर्वश्च तकारः ॥ ३३ ॥

टकारपूर्वो नकारपूर्वो वा तकार आगमो भवति सषकारपरः । सषकारपर इति चशब्दो ज्ञापयति । यथा—"वट्त् स्वयमभिगूर्ताय" (सं. ३—२—८) । एवम्—"विद्वान्त्सोमेन" (सं. ३--२--२) । मासान् षडहो (?) । सषकारपर इति किम् ? "एतान् होमानजुहवुः" (सं. १—५—४) । टनकारपूर्व इति किम् ? "सं सोमस्तनूभिः" (सं. २—१—११) ॥

## स्पर्शपूर्वः शकारः छकारम् ॥ ३४ ॥

स्पर्शपूर्वः शकारः छकारमापद्यते । यथा—"यावच्छो वै रेतसः" (सं. १—५—९) । "अनुष्टुप्छारदी" (सं. ४—३—२) । स्पर्शपूर्व इति किम् ? "आशुः शिशानः" (सं. ४—६—४) ॥

## न मकारपूर्वः ॥ ३५ ॥

न खलु मकारपूर्वः शकारः छकारमापद्यते[1] । यथा—"सँश्रवा ह"

---

1. "स्पर्शत्वान्मकारस्य तत्पूर्वे शकारे प्राप्तं छत्वमनेन निषिध्यते । नन्वेतदनुपपन्नम् ; "रेफोष्मपरः" (१३—२) इति मकारस्य लोपविधानान्न शकारस्य छत्वापत्तिनिमित्तमस्ति इति । मैवम् ; छत्वापादकालोपसूत्रयोः छत्वापादकस्यैव पूर्वत्वात् "तत्र पूर्वं०" (५—३) इति न्यायेन छत्वमेव कर्तव्यं स्यात् । तथा सति "मकारः स्पर्शपरस्तस्य०" (५—२७) इति मकारे ञत्वमापन्ने "सञ्छितं मे ब्रह्म" इति स्यात् । तन्मा भूदित्येतत्सूत्रमुपपन्नमेव ।" त्रि० ।

(सं. १—७—२) इति ॥

पकारपूर्वश्च वाल्मीकेः ॥ ३६ ॥

वाल्मीकेः शाखिनः पकारपूर्वः शकारः छत्वापत्तिं न प्राप्नोति। चशब्दः प्रतिषिध्यते ॥

व्यञ्जनपरः पौष्करसादेर्न पूर्वश्च ञकारम् ॥ ३७ ॥

व्यञ्जनपरः पौष्करसादेरिति वाक्यच्छेदः। चशब्दः प्रतिषेधमन्वादिशति। "आदित्यान् श्मश्रुभिः" (सं. ५-७-१२)। "तस्मात् श्रेयाँसम्" (सं. ५—१—२)। व्यञ्जनपर इति किम्? "तच्छंयोरावृणीमहे" (सं. २—६—१०) इति। व्यञ्जनपरान्नपूर्वस्य णत्वप्रतिषेधः न स्वरपरादिति इह मा भूत् "तेनैवैनाञ्छमयति" (सं. ३—४—८) ॥

प्रथमपूर्वो हकारश्चतुर्थं तस्य सस्थानं प्लाक्षि-कौण्डिन्य-गौतम-पौष्करसादीनाम् ॥ ३८ ॥

प्रथमपूर्वो हकारस्तस्य प्रथमस्य सस्थानं सवर्गीयं चतुर्थमापद्यते प्लाक्ष्यादीनामाचार्याणां मतेन। यथा—"अर्वाग्घ्येनं परैः" (सं. ६—३—३)। "सरद्ध वा अश्वस्य" (सं. ५—३—१२)। प्रथमपूर्व इति किम्? "प्रत्यङ्होतारमतिसर्पेत्" (सं. ६—३—१) ॥

अविकृत एकेषाम् ॥ ३९ ॥

एकेषां शाखिनां प्रथमपूर्वो हकारः अविकृतो भवति। यथा— "सरद् ह वा अश्वस्य" (सं. ५—३—१२) ॥

चतुर्थोऽन्तरे शैत्यायनादीनाम् ॥ ४० ॥

शैत्यायनादीनां कोहलीपुत्र–भारद्वाज-स्थविरकौण्डिन्य-पौष्करसादीनां शाखिनां प्रथमहकारयोरन्तराले चतुर्थ आगमो भवति । तस्येदानीमनियमेन प्राप्तिरन्याचार्याणाम् । तस्मात् प्रकृत एव सस्थानश्चतुर्थः स्यात् । "सरद्द् ह वै" (सं ५—३—१२) । "यत्ध् हारियोजनीरिति" (सं. ६—५—९) ॥

मीमाँसकानां च ॥ ४१ ॥

मीमांसकानां च शाखिनां प्रथमहकारयोरन्तराले प्रथमसस्थानश्चतुर्थ आगमो भवति । यथा—"अर्वाग्घ्ह्येनम्" (सं. ६—३—३) । "यद्घ्होष्यामि" (स. ६—५—९) ॥

इति प्रातिशाख्यव्याख्यायां माहिषेयभाष्याख्यायां

छन्दोभाषायां पञ्चमोऽध्यायः ॥

———

## अथ षष्ठोऽध्यायः ॥

### अथ षकारँ सकार-विसर्जनीयौ ॥ १ ॥

अथेत्यधिकारः । सकार-विसर्जनीयौ षकारमापद्येते इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्र उदाहरिष्यामः ॥

### स्वानासोदिव्यापोह्ययमुकमूमोप्रोत्रीमहिद्यविपद्यवग्रह-पूर्वः ॥ २ ॥

स्वानासोदिवि, आपोहि, अयमु, कमु, ऊ, मो, प्रो, त्री, महि, द्यवि, पदि, इत्येवंपूर्व अग्रहपूर्वश्च सकारः षकारमापद्यते । यथा—"स्वानासो दिविषन्त्वग्नेः" (सं. १—२—१४) । स्वानासो दिवीति किम्? "तृतीयस्यामितो दिविसोमः" (सं. ३—५—७) । "आपो हि ष्ठा मयोभुवः" (सं. ४—१—५) । आपो हीति किम्? "न हि स्वस्वँ हिनास्ति" (सं. ५—१—७) । "अयमुष्य प्र देवयुः" (सं. ३—५—११) । "कमु ष्विदस्य" (सं. २—६—११) । अयमुकमु इति किम्? "तदु सोम आह" (सं. ४—२—८) । "ऊर्ध्व ऊषु णः" (सं. ४—१—४) । "मो षू ण इन्द्र" (सं. १—८—३) । "प्रो ष्वस्मै पुरो रथम्" (सं. १—७—१३) । "त्री षधस्थेति" (सं. २—४—११) । "महि षद्द्युमन्नमः" (सं. ३–२–८) । "य उप द्यवि ष्ठ" (सं. २–४–१४) । "पदि षितामसुञ्चता" (सं. ४—७—१५) । अवग्रहपूर्वः—"हंसः शुचिषत्" (सं. १–८–१५) । "नृषदं त्वा द्रुषदम्" (सं. १–७–१२) ॥

### असदामा[1] सिश्वँश्च ॥ ३ ॥

असदाम[2] असिश्वन् इत्येतयोर्ग्रहणयोः सकारः षकारमापद्यते ।

---

1. "मसि" आ० ।

2. "दाद अ" आ० ।

अवग्रहपूर्व इति चकारो ज्ञापयति । यथा—"येन कामेन न्यषदामेति" (सं. ७—५—२) । "याभिर्मित्रावरुणावभ्यषिञ्चन्" (सं. १—८—११) । अवग्रहपूर्व इति किम् ? "अजायां [1]घर्मं प्रासिञ्चन्" (सं. ५—४—३) । अवग्रहपूर्वे अकारेण व्यवहृतिरिति सूत्रारम्भः ॥

## उपसर्गनिष्पूर्वोऽनुदात्ते पदे ॥ ४ ॥

उपसर्गपूर्वः निष्पूर्वश्च सकारः षकारमापद्यते अनुदात्ते[2] पदे वर्तमानः । यथा उपसर्गपूर्वः— "साम्राज्येनाभिषिञ्चामि" (सं. १—७—१०) । "यजमाने प्रतिष्ठापयन्ति" (सं. ६—१—४) । "अश्मन्नूर्जमिति परि षिञ्चति" (सं. ५—४—४) । "इमं विष्यामि" (सं. १—१—१०) । निष्टनिहि दुरिता" (सं. ४—६—६) । "विप्रो दूतः परिष्कृतः" (सं. ३—२—११) । उपसर्गनिष्पूर्व इति किम् ? "अर्णवे सदने सीद" (सं. ४—३—१) । "बृहतः शर्मणि स्यामग्नेः" (सं. ४—१—५) । अनुदात्ते पद इति किम् ? "वि सीमतः सुरुचो वेन आवः" (सं. ४—२—८) । "अभि सवना पाहि विष्णुः" (सं. १—४—१०) । अनुदात्त इति सप्तम्या आधारो निर्दिश्यते । प्रकृतत्वाच्च तस्यैवाधारत्वम् । [3]पदग्रहणेन कालार्थः पदकाल इति । अन्यथा संहितायामाधारे विकृत्युपगतिः स्यात् ॥

## रासस्सप्ते अग्निर्न्निर्विदुर्मीढुः पायुभिर्वेस्सुमतिर्माकिरीयुरायुराभिस्सधिर्नकिस्तकारपरो नित्यम् ॥ ५ ॥

रासोऽग्निः, सप्तेऽग्निः, निः, विदुः, मीढुः, पायुभिः, वेः, सुमतिः, माकिः, ईयुः, आयुः, आभिः, सधिः, नकिः, इत्येतेषु तकारपरो विसर्जनीयः षकारमापद्यते । यथा— "अविदुष्टरासः । अग्निष्टत्"

---

1. "धर्ममप्रा" आ० ।
2. अनुदात्ते सर्वानुदात्ते ।
3. पदकाले अनुदात्त इत्यर्थः ।

(सं. १—१—१४)। "[1]मेघ्यश्च सप्ते। अग्निष्ट्वा" (सं. ५-१-११)। रासस्सप्तेति किम्? "तेजोऽनुप्रेहि अग्निस्ते तेजः" (सं. १—१—१०)। "अग्निस्तत्पुनः" (सं. ३—२—५)। "तेजसा निष्टपामि" (सं. १-१-१०)। "विदुष्टँरँ सपेम" (सं. २—५—१२)। विदुरित्येतास्मिन् ग्रहणे अविदुरित्यस्मिन्नपि विधिः प्राप्नोति। कस्मात्? "अप्यकारादि" (१---५२) वचनात्। यथा—"विदुषा अविदुष्टरासः" (सं. १--१---१४)। "मीढुष्टम शिवतम" (सं. ४—५—१०)। "अदब्धेभिः सवितः पायुभिष्ट्वम्" (सं. १—४—२४)। पायुभिरिति किमर्थम्? "त्रिभिस्तिष्ठँस्तिष्ठति" (सं. ५—४—१२)। "पावक शोचे वेष्टवँ हि" (सं. ४—३—१३)। "गम्भीरा सुमतिष्टे अस्तु" (सं. १—४—४५)। सुमतिरिति किम्? "प्रमतिस्ते देवानाम्" इत्यन्यस्यां शाखायाम्। "माकिष्टे व्यथिरा दधर्षीत्" (सं. १—२—१४)। "ईयुष्टे ये पूर्वतराम्" (सं १--४--३३)। "आयुष्टे विश्वतो दधत्" (सं. १—३—१४)। "आभिष्टे अद्य" (सं. ४-४-४)। "सधिष्टव सौषधीः" (सं ४—२—३)। "नकिष्टं घ्नन्त्यन्तितः" (सं. २-१-११)। तकारपर इति किम्? "आयुश्च मे" (सं. ४-७-१)। [2]नित्यमिति किम्? "ऋकाररेफवति" (६—८), "अवग्रहः" (६—९) इति। अवग्रहप्रतिषेधात् विदुरित्यस्मिन् ग्रहणे अवग्रहस्थस्य विसर्जनीयस्य षत्वं न स्यात्। अन्यथा अनवग्रहः स्यत्। यथा—निष्टपामि तस्मान्नित्यं इत्यारभ्यते। "विदुष्टरं सपेम" इति सिध्यति॥

अथ न ॥ ६ ॥

---

1. "ध्यं च" आ०।

2. "नित्यशब्दः किमर्थः? 'ऋकाररेफवति', 'अवग्रहः' इति प्रतिषेधं वक्ष्यति। अविदुः इत्यत्र विसर्जनीयस्यावग्रहस्थत्वात् षत्वं न स्यात्, तन्मा भूदिति। कण्ठोक्तिरपि विदुरित्यस्यैव न त्वविदुरित्यस्येति दौर्बल्यात् तत्संग्रहणार्थो नित्यशब्द उपयुज्यते" त्रि०।

अथेत्यधिकारः । नेत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

अवर्णव्यञ्जनशकुनिपत्न्यृतु[1]मृत्युमालिम्लुबृहस्पतिपूर्वः ॥

अवर्णपूर्वः व्यञ्जनपूर्वश्च शकुनि, पत्नि, ऋतु, मृत्यु, मलिम्लु, बृहस्पति, इत्येवंपूर्वः लक्षणान्तरप्राप्तेः सकारः षकारं नापद्यते । यथा अवर्णपूर्वः--"वसुरन्तरिक्षसत्" (सं. १—८—१५)। "यध्दविरासाद्याग्निम्" (सं.६--२--१)। इत्यादिषु अवग्रहपूर्वत्वात् सकारस्य षत्वे प्राप्ते, अवर्णपूर्वत्वात्प्रतिषेधः । "आ सिञ्चस्व जठरे" (सं. १–४–१९)। "हवींष्यासादयेत्" (सं. १–६–१०)। "उपसर्गनिष्पूर्वोऽनुदात्ते पदे" (६—४) इत्यत्र षत्वं प्राप्तं अवर्णपूर्वत्वात् प्रतिषिध्यते । व्यञ्जनपूर्वः—"ऋक्सामे वै देवेभ्यः" (सं. ६--१—३)। "उत्सादेन जिह्वाम्" (सं. ५—७—११) । अवग्रहपूर्वत्वात् षत्वं प्राप्तं व्यञ्जनपूर्वत्वात् प्रतिषिध्यते । "बृहस्पतिं शकुनिसादेन" (स. ५—७—१४)। "पत्नी संयाजानामृचा" (सं. २—६—१०)। "ऋतुस्थास्तस्य" (सं. ५–७–६)। "मृत्युसंयुत इव" (सं. १–५--९)। "नैनं मलिम्लुसेना विन्दति" (सं. ६ —३—२)। "बृहस्पातिसुतस्य ते" (सं. १—४—२७) ॥

ॠकाररेफवति ॥ ८ ॥

ऋकारवति रेफवति च पदे न खलु सकारः षकारमापद्यते । यथा—"विसृपो विरफ्शिन्" (सं. १—१—९) । "असन्दितो विसृज" (सं. १—२—१४) । रेफवति—"विस्रंसयेदमेहे न" (सं. ६—२—९)। "अनुस्तरणी स्यात्" (सं. ६—१—७)। "प्रतिसारं वहन्ति" (सं. ७—२—८) ॥

अवग्रहः ॥ ९ ॥

---

1. "तुम" आ० ।

अवग्रहस्थः सकारः षत्वं नापद्यते । यथा—"तस्यां देवा अधि संवसन्तः" (सं. ३-५-१) । "अभि समगच्छन्तेति" (सं. २-५-३) । "यज्ञानामभि संविदाने" (सं. ५—१—११) । एतेषूदाहरणेषूपसर्गपूर्वत्वात् षत्वं प्राप्तम् , अवग्रह इति प्रतिषेधः कृतः । तस्मान्नोपपद्यते ॥

सवस्थानम् ॥ १० ॥

सव, स्थानम् इत्येतयोर्ग्रहणयोः सकारः षकारं नापद्यते । यथा— "अग्निसवश्चित्यः" (सं. ५—६—२) । "अनु सवनं पुरोडाशानाम्" (सं. ६-५-११) । "सवने सवने अभि गृण्हाति" (सं. ६—४—११) । सव इत्येतस्य ग्रहणस्याकारगृहीतस्य नामार्थस्य सर्वविभक्त्यन्तस्य प्रतिषेधो भवति, "अकारो व्यञ्जनानाम्" (१—२१), "ग्रहणस्य च" (१—२२) इति वचनात् । स्थानम्—"व्रजं गच्छ गोस्थानम्" (सं. १—१—९) ॥

न धिपूर्वे ॥ ११ ॥

नेति प्रतिषेधः । प्रतिषेधप्रतिषेधोऽयम् । सवस्थानमित्येतयोर्ग्रहणयोः न खलु धिपूर्वस्य सकारस्य षत्वप्रतिषेधो भवति । "अधिषवणमसि" (सं. १—१—५) । "अधिष्ठानमारंभणम्" (सं. ४ —६—२) ॥

सन्तानेभ्यः सप्ताभिः सम्मिताँस्तनाँ[1] सीतँस्पशस्सक्सनिसनिस्सनीस्सभेयः सत्वा सस्यायै ॥ १२ ॥

सन्तानेभ्यः, सप्ताभिः, सम्मिताम्, स्तनाम् सीतम्, स्पशः, सक्, संनि, [2]सनिः, सनीः, सभेयः, सत्वा, सस्यायै, इत्येतेषु ग्रहणेषु सकारः षकारं नापद्यते । यथा—"परि सन्तानेभ्यः" (सं. ७—४—२१) । "त्रिसप्ताभिः पशुकामस्य" (सं. ५-२-६) । "वेदिसम्मितां मिनोति" (सं. ५-६-८) ।

1. "सम्मितां सीतस्प" आ० ।

2. सनिरिति नास्ति आ० ।

"द्विस्तनां करोति" (सं. ५—१—६) । "अनुसीतं वपति" (सं. ५—२—५) । "तनूपा नः प्रतिस्पशः" (सं. ५—७—३) । "पृश्निसक्थमा लभेत" (सं. २—१—३) । "पृश्निसक्थास्त्रयः" (सं. ५—६—२३) । अपदग्रहणं संक्षेपार्थम् । "तस्मादेतद् गोसनि" (सं. ७—५—२) । "विद्युत्सनिरसि" (सं. ४—४—६) । "वृष्टि-[1]सनीरुप दधाति" (सं. ५—३—१) । "स्वध्वर्युः सुसभेयः" (सं. ७—१—८) । "अभि सत्त्वा सहोजाः" (सं. ४—६—४) । "कृष्यै त्वा सु सस्यायै" (सं. १—२—२) ॥

न स्वरस्पर्द्धास्स्तरीमसाहस्रसारथिस्स्फुरन्तीस्तु[2]ब्ज्योतिरा[3]युश्चतुष्पूर्वस्तो[4] ॥ १३ ॥

नेति प्रतिषेधः । स्वर, स्पर्द्धाः, स्तरीम, [5] साहस्र, सारथिः, स्फुरन्ती, स्तुप्, [6] इत्येतेषु ग्रहणेषु सकारस्य षत्वप्रतिषेधो न भवति[7] । यथा—"आधावन्त्वंब निष्वर" (सं. १–४–१) । "विष्पर्द्धारच्छन्दः" (सं. ४–३–१२) । "सुष्टरीमा जुषाणः" (सं. ५—१—११) । साहस्रशब्दस्याकारगृहीतस्य सर्वविभक्त्यन्तस्य विधिः प्राप्नोति "ग्रहणस्य च" (१—२२) इति वचनात् । "द्विषाहस्रं चिन्वीत" (सं. ५—६—८) । "त्रिषाहस्रो वा

1. सन् इत्येतावतैव सिद्धे सनि, सनिः, सनीः, इति प्रत्येकपाठः "मृधा वा एषोऽभिपण्णः" (सं. २—४—२), "निषण्णाय स्वाहा" (सं. ७—१—१९), इत्यादौ मा भूदिति ।
2. "स्तुवज्ज्यो" आ० ।
3. "रायुःपू" आ० ।
4. "र्वस्ते" आ० ।
5. साहस्र इति नास्ति । आ० ।
6. "स्तुव इ" आ० ।
7. ज्योतिः, आयुः, चतुः, एवम्पूर्वश्च "स्तो" इत्यत्र सकारः "ऋकाररेफवति" "अवर्णव्यञ्जनशकुनि०" (६—८,७) इत्युक्तं निषेधं नापद्यते, किन्तु षत्वमापद्यत इति प्रतिप्रसवार्थोऽयं नकारः इति शेषः ।

असौ" (सं. ५—६—८)। "कामयते सुषारथिः" (सं. ४–६–६)। "विष्फुरन्ती अमित्रान्" (सं. ४—६—६)। "सष्टुप्छन्दोऽनुष्टुप्छन्दः" (सं. ४—३—१२)। "ज्योतिष्टोमं प्रथममुप यन्ति" (सं. ७–४–११। "आयुष्टोमं तृतीयमुप यन्ति" (सं. ७—४—११)। "चतुष्टोमो अभवत्" (सं. ४—३—११) । एवंपूर्व इति किम् ? "एता अक्ष्णयास्तोमीया अपश्यन्" (सं. ५—३—३)। स्तोम इति किम्? "चतुस्स्तनां करोति" (सं. ५—१—६)॥

[1]तर्हाँस्तस्मिन् लोकान् विद्वाँस्ताँस्त्रीन्युष्मानूर्ध्वानंबकानृतूनश्मन् कृण्वन् पितॄननान् कपालाँ[2]स्तिष्ठन्नाद्युदात्ते नेमिर्देवा[3]न्त्सवने [4]पशूँस्तकारपरस्सकारं प्राकृतो नित्ये॥ १४॥

तर्हान्, तस्मिन्, लोकान्, विद्वान्, तान्, त्रीन्, युष्मान्, ऊर्ध्वान्, अम्बकान्, ऋतून्, [5]अश्मन्, कृण्वन्, पितॄन्, अनान्, कपालान्, तिष्ठन्नाद्युदात्ते, नेमिर्देवान्, सवनेपशून् । तर्हानित्येतदादिषु पदान्ते नकारः प्राकृततकारपरः सकारमापद्यते। तस्मिन् तकारे यथा— "शततर्हाँस्तृँहन्ति" (सं. १—५—७) । "तस्मिँस्त्वा दधामि" (सं. १—६—५) । "लोकाँस्त्रेधादुहत्" (सं. २—३—६) । "विद्वांस्त्रैधातवीयेन" (सं. २—४—११)। "ताँस्ते दधामि जम्भयोः" (सं. ४—१—१०)। "त्रीँस्तृचाननु ब्रूयात्" (सं. २—५—१०) । "युष्माँस्तेऽनु येऽस्मिन्" (सं. ३—२—५)। "ऊर्ध्वाँस्तानुपाब्दिमतः" (सं. ३—१—९)। "त्र्यम्बकाँस्तृतीयसवनम्" (सं. ३—२—२)। "ऋतूँस्तन्वते कवयः" (सं. ४—३—११) । "अश्मँस्ते क्षुत्"

1. "र्हास्त" आ०।

2. "लान्ति" आ०।

3. "वास" आ०।

4. "शूस्त" आ०।

5. "श्म" आ०।

(सं. ४—६—१)। "पुनः कृण्वँस्त्वा पितरम्" (सं. ४—७—१३)। "पितृँस्तन्तुरिति" (सं. ५—३—६)। "प्राणाँस्तस्यान्तर्यन्ति" (सं. ७—१—३)। "द्वादशकपालाँस्तृतीयसवने छन्दांसि" (सं. ७—५—६)। तिष्ठन्नित्येतस्मिन्नाद्युदात्ते—"त्रिभिस्तिष्ठँस्तिष्ठति यच्चतस्रः" (सं. ५—४—१२)। आद्युदात्त इति किम्? "न प्रत्यतिष्ठन् ता वसुकोऽसि" (सं. ५—३—६)। तिष्ठन्नित्यनेन अतिष्ठन्नित्यस्य ग्रहणम्। कस्मात्? "अप्यकारादि" (१—५२) वचनात्। "नेमिर्देवाँस्त्वं परिभूः" (सं. २—५—९)। नेमिर्देवानिति किम्? "वपया गच्छ देवान् त्वम्" (सं. ३—१—४)। "माध्यन्दिने सवने पशूँस्तृतीयसवने" (सं. ३—२—९)। सवने पशूनिति किम्? "घोरा तनूस्तान्तेन" (सं. ५—७—३)। नित्य इति किम्? "य एवं विद्वान्थ्सोमेन" (सं. ३—२—२)॥

इति माहिषेयभाष्याख्यायां प्रातिशाख्यव्याख्यायां
छन्दोभाषायां षष्ठोऽध्यायः॥

———

## अथ सप्तमोऽध्यायः ॥

### अथ नकारो णकारम् ॥ १ ॥

अथेत्यधिकारः । नकारो णकारमापद्यते इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

### षुषूकृधिसुवः सामिन्द्रास्थूर्युरुवाष्षट्त्रिग्रामनिष्पूर्वः[1] ॥

[2]षु, षू, कृधिसुवः, सामिन्द्र, अस्थूरि, उरु, वाः, षट्, त्रि, ग्राम, निः इत्येवंपूर्वो नकारो णकारमापद्यते । यथा—"ऊर्ध्व ऊषु ण ऊतये" (सं. ४—१—४) । "मो षू ण इन्द्र" (सं. १—८—३) । विकृतग्रहणं किमर्थम् ? सु सू इत्येतयोर्यदा आधारस्य षत्वं नास्ति तदा णत्वनिवृत्त्यर्थम् । "ब्रह्मणा कृधि सुवर्ण शुक्रम्" (सं. २—२- १२) । कृधि सुवरिति किम् ? "सुवर्न शुक्रः स्वाहा" (सं. ५—७—५) । "सामिन्द्र णो मनसा" (सं. १—४—४४) । सामिन्द्रेति किम् ? "वर्तयेन्द्र नर्दबुद" (सं. ३—३—१०) । "अस्थूरिणो गार्हपत्यानि सन्तु" (सं. ५- ७—२) । "उरुकृदुरु णस्कृधि" (सं. २—६—११) । "तस्माद्वार्णाम वोहितम्" (सं. ५—६—१) । "षण्णवत्यै स्वाहा" (सं. ७—२—१५) । "त्रिणवस्तोमः" (सं. ४—३—९) । "ग्रामणी राजन्यस्तेषाम्" (सं. २—५—४) । "ताभिर्निर्णेनिक्ते" (सं. ७—२—१०) ॥

### [3]हन्यादुप्यमानं च ॥ २ ॥

---

1. "र्वम्" आ० ।
2. "नन्वत्र षु षू इत्यनयोरन्यतरस्य ग्रहणे 'अपि विकृतम्' (१—५१) इति परिभाषया इतरस्यापि निमित्तत्वं किं न स्यात् ? तदुच्यते—विहितविकारयोगाद्विकृतं भवति । न चात्र षुशब्दस्य दीर्घादेशो विधीयते । षू इत्यस्य तु यद्यपि ह्रस्वादेशो विधीयते, तथाप्यसौ विभागविषयत्वात् संहितायां नोपकरोति । अतः उभयं गृह्यते" वै० ।
3. "न्या उ" आ० ।

हन्यात्, उप्यमानम्[1], इत्येतयोः निष्पूर्वयोः नकारो णकारमापद्यते। यथा—"योनेर्गर्भं निर्हण्यात्" (सं. ५—६—९)। "निरुप्यमाणमभि मन्त्रयेत" (सं. १—६—८)। निष्पूर्व इति चशब्दो ज्ञापयति। [2]कस्मात्? "न नि हन्यात् न लोहितं कुर्यात्" (सं. २—६—१०)॥

पारी-परि-परी-प्रपूर्वः ॥ ४ ॥

पारी, परि. परी, [3]प्र, इत्येतेषां पूर्वो नकारः णकारमापद्यते। यथा— "पारीणह्यस्येशे" (सं. ६—२—१)। "परि णो रुद्रस्य हेतिः" (सं. ४—५—१०)। "वीरवन्तं परीणसम्" (सं. २—२—१२)। "प्र णो देवी सरस्वती" (सं. १—८—२२)॥

अवर्णव्यवेतोऽपि ॥ ५ ॥

अपिरन्वादेशकः। पार्यादीनामन्वादेशः क्रियते। पार्यादिपूर्वः नकारः अवर्णेन व्यवेतो णकारमापद्यते। यथा—"पर्याणीयाहवनीयस्याम्" (सं. ७—१—६)। "प्राणाय स्वाहा" (सं. ७—१ १९)॥

वाहन उह्यमानो यानमयन्यवेन वञ्च ॥ ६ ॥

प्रपूर्वे[4]ष्विति चकारो ज्ञापयति। "अन्वादेशोऽन्त्यस्य" (१—५८) इति अन्त्यस्यान्वादेशः। वाहनः, उह्यमानः, यानम्, अयन्, यवेन, वन्, इति एतेषु ग्रहणेषु प्रपूर्वेषु नकारो णकारमापद्यते। यथा—"विभूरसि प्रवाहणः" (सं. १—३—३)। "यस्य प्रयाणमन्वन्ये" (सं. ४—१—१)। "यो वै यज्ञस्य प्रायणम्" (सं. १—६—११)। "तासामु यन्ति प्र यवेण" (सं. ४—३—११)। "प्राचीनमाहवनीयात् प्रवणँ स्यात्"

---

1. "न इ" आ०।
2. ज्ञापनं च किमर्थमित्यत्रोदाहरति—कस्मादित्यादि।
3. प्र इति नास्ति आ०।
4. "ष्विति चकारो ज्ञा" इत्ययमंश आदर्शे लुप्तः।

(सं. ६—२—६) । अन्वादेशः किम् ? "वन्हिरसि हव्यवाहनः" (सं. १—३—३) । "ऋतुशो देवयानम्" (सं. ४—६—८) । "अकृन्तन्यवेन सम्मितम्" (सं. २—६—८)। अयनुवचनं संक्षेपार्थम् ॥

प्रापूर्वश्च ॥ ७ ॥

चकारोऽन्वादेशकः । वन् इत्येतस्मिन् ग्रहणे प्रापूर्वो नकारो णकारमापद्यते । यथा—"प्रावणेभिः" (सं. ४—२—४) ॥

इन्द्रोऽयजुष्पूर्व एनं केन ॥ ८ ॥

इन्द्रः, अयजुः, इत्येवंपूर्वयोः एनम्, केन, इत्येतयोर्नकारो णकारमापद्यते यथासंख्येन । यथा—"इन्द्र एणं प्रथमो अध्यतिष्ठत्" (सं. ४–६–७) । "अयजुष्केण क्रियते" (सं. ५—१—२) । इन्द्रोऽयजुष्पूर्व इति किम् ? "त एनं भिषज्यन्ति" (सं. २—३—११) । "ब्रह्मवादिनः केन तदजामीति" (सं. ७—४—१०) । एनं केनेति किम् ? "इन्द्रो नेषदति" (सं. ५—७—२) ॥

नृश्रीपूर्वो मनाः ॥ ९ ॥

नृ, श्री, इत्येवं पूर्वो नकारो णकारमापद्यते मना इत्येतस्मिन् ग्रहणे । यथा—"तृतीयमप्सु नृमणा अजस्रम्" (सं. १—३—१४) । "देवश्रीः श्रीमणाः" (सं. ४—६—३) । नृश्रीपूर्व इति किम् ? "सुमना नामेष्टिर्यमद्य" (सं. २—५—५) ॥

अंगानामोनेगानिगानांग्यानियामेन ॥ १० ॥

अंगानाम्, ओने, गानि, गानाम्, ग्यानि, यामेन, इत्येतेषु ग्रहणेषु नकारो णकारमापद्यते। यथा—"यत्र्यंगाणाँ समवद्यति" (सं. ६–३–१०)। "दुरोणे" (सं. १—२—१४) । "अति दुर्गाणि विश्वा" (सं. १—१—१४) । "नमः सखीनां पुरोगाणाम्" (सं. ३—२—४)।

"यानि वै छन्दाँसि सुवर्ग्याण्यासन्" (सं. ५—३—५) । "अन्तर्यामेणान्तरधत्त" (सं. ६—४—६) ॥

## रषःपूर्वो हवन्यह्नेहन् ॥ ११ ॥

रपूर्वः षपूर्वश्च हवनी, अह्ने, हन्, इत्येतेषु ग्रहणेषु नकारो णकारमापद्यते । यथा—"अग्निहोत्रहवणी च शूर्पम्" (सं. १—६—८) । "शरद्यपराह्णे" (सं. २—१—२) । "वृत्रहणं पुरन्दरम्" (सं. ३-५-११)। षःपूर्वः—"रक्षोहणं वाजिनम्" (सं. १—२—१४)। षःपूर्व इति किम् ? "रक्षोहणो वलगहनः" (सं. १— ३—२) । हन्नित्यपदग्रहणं संक्षेपार्थम् । एवमन्यत्राप्यपदग्रहणं वेदितव्यम् । रषःपूर्व इति किम् ? "एण्यह्ने कृष्णः" (सं. ५—५—१५) । "वलगहनो वैष्णवान्" (सं. १—३—२) ॥

## रुपूर्वो मयन्यनी ॥ १२ ॥

मयानि, अनी, इत्येतयोर्ग्रहणयो रुपूर्वः नकारः णकारमापद्यते । यथा—"दारुमयाणि पात्राणि" (सं. ६—४—७) । "त्वे वसूनि पूर्वणीक" (सं. १—३—१४) । रुपूर्व इति किम् ? "अग्नयेऽनीकवते पुरोडाशम्" (सं. १—८—४) ॥

## [1]वाघाषपूर्वस्तष्टम् ॥ १३ ॥

वाघापूर्वः षकारपूर्वश्च तकारः टत्वमापद्यते । यथा—"दार्वाघाटस्ते वनस्पतीनाम्" (सं. ५—५—१५) । "अग्निष्टद्विश्वमा पृणाति" (सं. १—१—१४) । वाघाषपूर्व इति किम् ? "दार्वाघाट इति दारु—आघातः" (सं. ५—५—१५) । "वयँ संघातं जेष्म" (सं. १-१-५) । "अग्निस्ते तेजो मा विनैत्" (सं. १—१—१०)। "उत वा घा स्यालात्" (सं. १—१—१४)। "निष्कृतिर्नाम वः" (सं. ४—२—६) ॥

---

1. आघाष इति वैदिकाभरणपाठः ।

[1]थश्च ठम् ॥ १४ ॥

षपूर्व इति चकारो ज्ञापयति । षपूर्वः[2] थकारः[3] ठकारमापद्यते । यथा— "गोष्ठं मा" (सं. १–१–१०) । "आपो हि ष्ठा मयो भुवः" (सं. ४–१–५) । षपूर्व इति किम् ? "व्रजं गच्छ गोस्थानम्" (सं. १—१—९) ॥

न तकारपरः ॥ १५ ॥

नेति प्रतिषेधः । तकारपरो[4] नकारः णत्वं नापद्यते । यथा—"पृथिव्याः पर्यन्तरिक्षात्" (सं. ३—१—१०) । "अवर्णव्यवेतोऽपि" (७—५) इति प्राप्तम् ॥

नह्यति नूनं नृत्यन्त्यन्योऽन्याभिरन्यान्यन्तश्च ॥

नह्यति, नूनम्, नृत्यन्ति, अन्यः, अन्याभिः, अन्यानि, एतेषु ग्रहणेषु नकारः, पदान्तवर्ती च, णत्वं नापद्यते । चशब्दः प्रतिषेधान्वादेशकः । यथा— "वाससा पर्यानह्यति" (सं. ६—१—११) । "प्र नूनं पूर्णवन्धुरः" (सं. १—८—५) । "दास्योमार्जालीयं परिनृत्यन्ति" (सं. ७–५–१०) । "प्रान्यः शँसति" (सं. ७–५–९) । "प्रान्याभिर्यच्छति" (सं. ५–१–६) । "प्रान्यानि पात्राणि युज्यन्ते" (सं. ६—५—११) । अन्य इति अकारान्तेनैव ग्रहणेनैव सिध्दे अन्योऽन्याभिरन्यानीति पदग्रहणम् "अनुप्राण्यात् प्रथमाँ स्वयमातृण्णाम्" (सं. ५—५ ५) इत्येवमादिषु णत्वप्रतिषेधनिवृत्त्यर्थः । एतेषु णत्वप्राप्तिः "पारीपरिपरीप्रपूर्वः" (७—४) इति, "अवर्णव्यवेतोऽपि" (७—५) इति च यथायोगम् । पदान्ते—"आ तिष्ठ वृत्रहन् रथं युक्ता ते" (सं. १—४—३७) ॥

इति प्रातिशाख्यव्याख्यायां छन्दोभाषायां
सप्तमोऽध्यायः ।

---

1. "धश्च" आ० । "थश्च ठः" भू० ।
2. "धका" आ० ।
3. "रष्टका" आ० ।
4. "रो लक्षणात् प्राप्नोति णत्वं नोपपद्य" आ० ।
"बाधाष्रादिविधिरनधिकृतत्वादुत्पन्नप्रध्वंसी, तस्मादत्र नायं निषेधः, प्रकृतो णत्वविधिरनेन विषयीक्रियते" त्रि० ।

अथ अष्टमोऽध्यायः॥

## अथ प्रथमः ॥ १ ॥

अथेत्यधिकारः । प्रथम इत्येतदधिकृतं वेदितव्यम्[1] ॥

## उत्तमपर [2]उत्तमं सवर्गीयम् ॥ २ ॥

तत्र प्रथमाः कचटतपाः । उत्तमाः ङञणनमाः । कचटतपानामन्यतमस्य पदान्ते वर्त्तमानस्य ङञणनमानामन्यतमेन उत्तरत्रावस्थितेन संहितायां क्रियमाणायां प्रथमस्सवर्गीयमुत्तममापद्यते । यथा—"वाङ्म आसन्" (सं. ५—५—९) । "त्रिष्टुङ्मुखो वै तृतीयः" (सं. ७—२—८)। "षण्मासो दक्षिणेनैति" (सं. ६—५—३) । "षण्णवत्यै स्वाहा" (सं. ७—२—१५) । "य+++वमेत्तन्नव+" (?) । उत्तमपर इति किम्? "वाक्त आप्यायताम्"(सं. १—३—९)। "षट्पदान्यनु निक्रामति" (सं. ६—१—८) ॥

## तृतीयँ स्वरघोषवत्परः ॥ ३ ॥

स्वरपरश्च घोषवत्परश्च प्रथमस्तृतीयमापद्यते सवर्गीयमेव । यथा— "स ते मा स्थादिन्द्रस्य त्वा" (सं. १—१—२) । "यद्दै होताध्वर्युम्" (सं. ३—२—९)। "वाग्वै देवेभ्यः" (सं. ६—१—४) । एवंपर इति किम्? "व्यानट् तमग्ने" । (सं. ४ २—१०) ॥

## ककुच्च मकारपरः ॥ ४ ॥

---

1. "अथ विसर्जनीयो०" (८—५) इतिपर्यन्तोऽयमधिकारः ।
2. "उत्तमसवर्गीयः" आ० ।

ककुदित्येतस्मिन् ग्रहणे मकारपरः प्रथमस्तृतीयमापद्यते सवर्गीयमेव । यथा—"ककुद्मान् प्रतूर्तिः" (सं. १—७—७) । ककुत्मानिति प्राप्ते । ककुदिति किम्? "य उन्माद्येत्" (सं. ३—४—८) । मकारपर इति किम्? "ककुच्छन्दः" (सं. ४—३—१२) ॥

[1]अथ विसर्जनीयो रेफमेतेषु ॥ ५ ॥

[2]अथेत्यधिकारः । विसर्जनीय इत्येवाधिकृतं वेदितव्यम् । रेफमेतेषु, स्वरघोषवत्सु परेषु विसर्जनीयो रेफमापद्यते । यथा—"तदग्निराह" (सं. ४—२—८) । "अग्निर्देवता वातः" (सं. ४—३—७) । "यो दुर्ब्राह्मणः" (सं. २—१—१०) । एतेष्विति किम्? "अग्निश्च मे" (सं. ४—७—६) ॥

न रेफपरः ॥ ६ ॥

रेफपरो[3] विसर्जनीयः रेफं नापद्यते । यथा—"रुरू रौद्रः" (सं. ५—५—१९) । रेफपरस्योत्तरत्र वक्ष्यमाणत्वात् ॥

ह्वारभावार्हारबिभरजीगरकरनन्तर्विवरसुवः पुनरहरहः प्रातर्वस्तः शमितः सवितः[4] सनुतस्स्तनुतः स्तोतर्होतः पितर्मातर्यष्टरेष्टर्न्नेष्टस्त्वष्टः ॥ ७ ॥

ह्वाः, अभाः, वाः, हाः, अबिभः, अजीगः, अकः, अनन्तः, विवः, सुवः, पुनः, अहरहः, प्रातः, वस्तः, शमितः, सवितः, सनुतः,[5] स्तोतः,

1. "अथ विसर्जनीयः", "रेफमेतेषु" इति सूत्रद्वयं प्रत्येकं व्याख्यातम् । मु० । भू० ।
2. "अथ स्वरपरो यकारम्" (९—१०) इत्यवधिभूतोऽयमधिकारः ।
3. "रेफवि" आ० ।
4. "वितस्तनु" भू० ।
5. इतोऽनन्तरं 'स्तनुत' इति मूले पठितं भाष्ये न दृश्यते । अस्योदाहरणं च भाष्यकारो न ददाति । त्रिभाष्यरत्नकारस्तु "स्तनुत इति शाखान्तरे" इत्याह ।

होतः, पितः, मातः, यष्टः, एष्टः, नेष्टः, त्वष्टः, इत्येतेषु ग्रहणेषु स्वरपरो वा घोषवत्परो वा विसर्जनीयो रेफमापद्यते । स्वरघोषवत्पर इत्येतत् प्रकृतत्वाल्लभ्यते । यथा—"दृँहस्व मा ह्वार्मित्रस्य त्वा" (सं. १—१—४) । "स्वे योनावभारुखा" (सं. ४—२—५) । "तस्माद्वार्णाम वो हितम्" (सं. ५—६—१) । "मा मे प्रहारास्ति वा इदम्" (सं. २—४—१२) । "अबिभस्तं तमबिभरबिभः" (सं. २—५—१) । "ओषधीरजीगरजीगरोषधीरोषधीरजीगः, अजीगरित्यजीगः" (सं. ४—६—७) । "देवत्राऽकरजक्षीरेण" (सं. ५—१—७) । "यज्ञपरुषोऽनन्तारित्यै" (सं. ५—२—५) "विवर्विवश्च च विवः, विवरिति विवः" (सं. ४—२—८) । "सुवरसि सुवर्मे" (सं. ५—७—६) । "पुनरग्न इषायुषा" (सं. १—५—३) । "अहरहर्योचिष्यतीति" (सं. १—५—९) । "अहरहर्मनुष्या अशनमिच्छन्ते" (सं. २—५—६) । "अहरहरिति किम् ? "पश्चाहो भवति" (सं. ७—३—८) । "प्रातरेतेन कक्षम्" (सं. ३—३—८) । "दोषावस्तर्द्धिया वयम्" (सं. १—५—६) । "शृतं हवी३श्शमितरिति" (सं. ६—३—१०) "देव सवितरेतत्ते प्राह" (सं. ३—२—७) । "आराच्चिद्द्वेषः सनुतर्युयोतु" (सं. १—७—१३) । "एतं स्तोतरेतेन" (सं. ७—४—२०) । "होतर्यविष्ठ" (सं. १—२—१४) । "मरुतां पितस्तदहं गृणामि पितरिति पितः मरुतां पितः" (सं. ३—३—९) । "पृथिवि मातर्मा मा हिंसीः" (सं. ३—३—२) । "अग्ने यष्टरिदन्नमः" (सं. १—१—१२) । "अशीयेष्टरेष्टरशीयाशीयेष्टः" (सं. १—२—११) । "नेष्टः" (सं. ६—५—८) इत्यन्यस्यां शाखायाम् । "शिवस्त्वष्टरिहागहि" (सं. ३—१—११) "करावरनुदात्ते पदे" (८—८) इति वक्ष्यति । तेनैवाकरित्यपि सिद्धम् । अनुदात्ते तद्वदन्यस्वरार्थं वचनम् । "द्रविणोदा वाज्यर्वाकः" (सं. ४·१-२) । "अकारर्वा" (?) । "अन्तरनाद्युदात्ते" (८—९) इति वक्ष्यति । तेनैवानन्तरित्यपि सिद्धे आद्युदात्ते तद्वदिति अन्यस्वरार्थं[1] वचनम् । स्वरघोषवत्पर इति किम् ? "तां संवत्सरमबिभस्तम्" (सं. २—५—१) । "प्रातस्तनेन जनयति" (सं. १—५—९) । "सीद होतः स्व उ लोके" (सं. ३—५—११) ।

---

1. "र्थत्वं व" आ० ।

"देवसवितः प्रसुव" (सं. १—७—७) । "नेष्टः पत्नीमुदानय" (सं. ६—५—८) ॥

## करावरनुदात्ते पदे ॥ ८ ॥

कः, आवः, इत्येते परे अनुदात्ते स्वरघोषवत्परे रेफमापद्येते[1] । "वर्णस्य विकारलोपौ" (१—५६) इति, विसर्जनीयस्यैव विकारो भवति । यथा—"मा देवानां मिथुया कर्भागधेयम्" (सं. १—३—७) । "सुरुचो वेन आवः । आवरित्यावः" (सं. ४—२—८) । अनुदात्त इति किम् ? "क इमामासिष्यतीति" (सं. ६—२—३) । "आवो वाजेषु" (सं. १—३—१३) । पद इति किम् ? "सहि गृहीतवसतीवरीको वसतीवरीः" (सं. ६—४—२) । स्वरघोषवत्पर इति किम् ? "आवः क्षेम उत योगे" (सं. ३—४—१०) ॥

## [2]अन्तरनाद्युदात्ते ॥ ९ ॥

अन्तरित्येतस्मिन् ग्रहणे अनाद्युदात्ते स्वरघोषवत्परो विसर्जनीयो रेफमापद्यते । यथा— "अन्तरग्ने रुचा" (सं. ४—१—९) । "अन्तर्यामे मघवन्" (सं. १—४—३) । अनाद्युदात्त इति किम् ? "एषोऽन्तोऽन्तं मनुष्यः" (सं. ७—२—७) । स्वरघोषवत्पर इति किम् ? "अन्तस्तं दधामि" (सं. १—४—३) ॥

## अवृत्परः ॥ १० ॥

आवृदित्येवंपरो विसर्जनीयो रेफमापद्यते । यथा— "जिन्वरावृत् स्वाहा" (सं. २—४—७) ॥

## इतिपरोऽपि ॥ ११ ॥

---

1 कः, आवः, इत्येतयोर्विसर्जनीयः पदकाले अनुदात्ते पदे वर्तमानः स्वरघोषवत्परो रेफमापद्यत इत्यर्थः ।

2. "अन्तना" भू० ।

अपीत्यन्वादेशः क्रियते । आवृत्परस्यान्वादेशः क्रियते । आवृत्पर[1] असौ विसर्जनीयः इतिपरोऽपि रेफमापद्यते । यथा— "श्रुतः श्रुतरितीति श्रुतः" (सं. २—४—७) ॥

## अहारह[2]स्सुवरनिंग्यान्ताः ॥ १२ ॥

"पुनराहार्जातवेदा विचर्षणिः" (सं. ३—२—५) । "अहर्देवानामासीत्" (सं. १—५—९) । "सुवरसि सुवर्मे" (सं. ५-७—६) । अनिङ्ग्यान्ता इति किम् ? "षडहा भवन्ति" (सं. ७—४—) । "पृष्ठ्यष्षडहो भवति" (सं. ७—२—६) । "ये देवा देवसुव स्थः" (सं. १—८—१०) । स्वरघोषवत्पर इति किम् ? "एवमुत्तममहः स्यात्" (सं. ७—२—२) । "सुवश्च मूर्धा च" (सं. १—ॱ—९) ॥

## न भि[3]भ्यां परः ॥ १३ ॥

[4]अहारहस्सुवरित्येतेषु अनिङ्ग्यान्तेष्वपि विसर्जनीयः भिभ्यामित्येवंपरो न खलु रेफमापद्यते । यथा— "उत्तरैरहोभिश्चरन्ति" (सं. ७-५-१) । "शमहोभ्याम्" (सं. १-३-९) इति निनयति । भिभ्यां पर इति किम् ? "अहर्भाजो वा एता देवाः" (सं. ७—४—५) । "सुवर्भानुरासुरस्सूर्यम्" (सं. २—१—२) ॥

## अँहश्च सर्वेषाम् ॥ १४ ॥

अंह इत्येतस्मिन् ग्रहणे विसर्जनीयो रेफं नापद्यते । "अहारहस्सुव०"

1 "रः असौ विसर्जनीयः सन्यया इतिपरोऽपि भवति तदापि रेफः" ? आ० ।

2 "हस्सुवरित्यनिंग्यान्तः" मू० । अहाः, अहः, सुवः, एतेषु पदेषु विसर्जनीयोऽनिंग्यान्तः स्वरघोषवत्परो रेफमापद्यत इत्यर्थः ।

3. "भिर्भ्यां" मु० ।

4. "अहरित्यत्र विसर्जनीयः परिगृह्यते, इतरत्र स्थितस्य एवम्परत्वाभावात" त्रि० ।

(८—१२) इति प्राप्तिः । अंह इत्येतस्मिन् पदे केचिदनुस्वारं प्रगृण्हन्ति केचिन्नावाप्तिम् । सर्वेषां तेषामेष प्रतिषेधो भवति । "अँह इन्द्रमेवाँहो-मुचम्" (सं. २—२—७) । "अंहोमुचे विवेष यन्मा" (सं. २—५—१२) । यत्वमोत्वं चास्य भविष्यति । चशब्दः प्रतिषेधमन्वादिशति । "ह्वारभार्वा"-(८—७)दीनां च यथायोगमोत्वयत्वलोपः नवमेऽध्याये वक्ष्यते । तेषा-मियमपवादरूपेण रेफापत्तिरुक्ता ॥

## अनवर्णपूर्वस्तु रेफपरो लुप्यते [1]दीर्घं च पूर्वः ॥ १५

अवर्णादन्यस्वरपूर्वो रेफपरो विसर्जनीयः । स च लोपमापद्यते । अनवर्णपूर्वो रेफपरो लोपविषयः । तस्य पूर्वस्वरो ह्रस्वश्चेत्, स च दीर्घमा-पद्यते । अनवर्णपूर्वो विसर्जनीयो रेफपरो लुप्यते । यथा— " रेवती रमध्वम्" (सं. १—३—७) । "यवागू राजन्यस्य" (सं. ६—२—५) । अनवर्णपूर्व इति किम् ? "यो रुद्रो अग्नौ यः" (सं. ५—५—९) । रेफपर इति किम्? " रेवतीर्नः सधमादः" (सं. १—७—१३) । तुश-ब्दारम्भादवर्णपूर्वोऽपि "ह्वारभारा" (८—७) दीनां [2]लुप्यते दीर्घं च पूर्व आपद्यते । यथा—"क्षामा रुक्मो अन्तर्विभाति" (सं. ४—१—१०) । "सुवो रोहाव हि" (सं. १—७—९) इत्यत्र कथं लोपदीर्घौ भवतः ? द्विरुक्त त्वात् ? ह्वारभारादिसूत्रे च अहारहस्सुवरिति च । विसर्जनीयस्तु उत्तर-त्रानुवर्तत एव ॥

## दीर्घं च पूर्वः ॥ १६ ॥

तस्माद्रेफपराद्विसर्जनीयात्[3] यः पूर्वो ह्रस्वः स च दीर्घमापद्यते । यथा—"रुरू रौद्रः" (सं. ५—५—१९) । [छन्दोभिर(प्यै)पोषाय] (?) । "तित्तिरी रोहित् कुण्डृणाची (सं. ५—५—१६) । यदास्य विसर्जनीयस्य लोपः तदैव दीर्घत्वं यथा स्यादित्येवमर्थश्चशब्दः ॥

---

1. " दीर्घं च पूर्वः " इति नास्ति । मु० । भू० ।
2. विसर्गो लुप्यत इत्यर्थः ।
3. लुप्तादिति शेषः ।

एष्टश्च ॥ १७ ॥

एष्टरित्येतस्मिन् ग्रहणे विसर्जनीयो रेफपरोऽवर्णपूर्वोऽपि लुप्यते, दीर्घं च पूर्वः[1] ॥

नैकेषाम् ॥ १८ ॥

[2]एकेषामाचार्याणां मते न। यथा–"एष्टो रायः" (सं. १–२–११) ॥

[3]द्वावुदात्तमोत्तरीयस्य रेफः ॥ १९ ॥

[4]द्वावुदात्तमोत्तरीयस्य शाखिनः एष्टरित्येतस्मिन् विसर्जनीयो रेफपरो रेफमापद्यते। यथा—"एष्टर् रायः" (सं. १ २—११) ॥

साङ्कृत्यस्योकारम् ॥ २० ॥

साङ्कृत्यस्य शाखिनः एष्टरित्येतस्मिन् विसर्जनीयो रेफपरः सह पूर्वेण स्वरेण[5] (आकारमापद्यते? उकारमापद्यते)। यथा—"एष्टो रायः" (सं. १—२—११) ॥

[6]ओकारमुख्यस्य सपूर्वः ॥ २१ ॥

उख्यस्याचार्यस्य[7] एष्टरित्येतस्मिन् विसर्जनीयो रेफपरः सह पूर्वेण

---

1. आपद्यत इति शेषः। यथा—"एष्टा रायः"।
2. "एतेषा" आ०।
3. "द्वावुत्तमो" मु०। भू०।
4. "उत्तमोत्तरीयस्य" (?)। "माहिषेयोक्तस्तु—द्वावुत्तमोत्तरीय इति कस्यचिन्नाम। तन्मते एष्टरिति विसर्जनीयो रेफपरो रेफमापद्यते। यथा—'एष्टर् रायः इति" त्रि०।
5. "ण ओका" (?)
6. "ओकारं" इति नास्ति। मु०। तच्च नावश्यकम्, पूर्वसूत्रादनुवृत्तेः।
7. "स्य तस्य ए" आ०। "उख्यस्य मते रेफपर एष्टरिति विसर्जनीयः पूर्ववर्णेन सह उकारमापद्यत इति माहिषेयोक्तम्। यथा—एष्टु

स्वरेण [1]उकारमापद्यते । यथा— "एष्टु[2] रायः" (?) (सं. १—२—११)॥

कखपकारपरः [3]षमकारपूर्वः समवग्रहः ॥ २२ ॥

ककारपरः खकारपरः पकारपरश्च अवग्रहान्तर्वर्ती विसर्जनीयः अकारादन्यस्वरपूर्वः षकारमापद्यते, अकारपूर्वः सकारम् । यथा—"यश्चक्षुष्कामः" (सं. २—३—१) । "हविष्कृतानाम्" (सं. ६—४—३) । "यथा स्यात् ग्रसितं निष्खिदति" (सं. ६—१—९) । "बहिष्पवमानेन पवयित्वा" (सं ६—४—९) । "चतुष्पादः पशवः" (सं. ५—१—१) । अकारपूर्वः—"भूयस्कृदसि वरिवस्कृदसि" (सं. ४—४—७) । "पथस्पथः परिपतिम्" (सं. १—१—१४) । "अधस्पदन्तमीङ्कृधि" (सं. १—६—१२) । अवग्रहपूर्व इति किम् ? "अक्ष्योश्चक्षुः कर्णयोः" (सं. ५—५—९) । "भवत्येव बहिः पवयित्वा" (सं. ६—१—२) । "अग्निर्वरिवः कृणोतु" (सं. १—३—४) । कखपकारपर इति किम् ? "विश्वतश्चक्षुरुत" (सं. ४—६—२) कखपकारपरत्वं प्रकृतमित ऊर्ध्वम् ॥

आविर्नि[4]रिडश्शश्वतोऽपसोदेवरिषाँऽहसोऽतिदिवोविश्वतोऽश्मनस्तमसः ॥ २३ ॥

आविः, निः, इडः, शश्वतः, अपसः, देवरिषः, अँहसः, अतिदिवः, विश्वतः, अश्मनः, तमसः इत्येतेषु ग्रहणेषु विसर्जनीयः कखपकारपरः अकारादन्यस्वरपूर्वः षकारमापद्यते, अकारपूर्वः सकारम् । यथा— "आविष्कृणुष्व" (सं. १—२—१४) । "यदामयति निष्कृतः"

---

रायः । वाररुचोक्तं तु—एष्टरिति विसर्जनीयो रेफपरः पूर्वेण सह रेफमापद्यते । यथा—एष्ट्र रायः" त्रि० ।

1. "ओकार" ?
2. "एष्टो" ?
3. "षका" आ० । भू० ।
4. "विन्निरि" आ० ।

(सं. ४—२—६) । "इडस्पदे" (सं. २—६—११) । "शश्वत-स्कर्हस्ते दधानः" (सं. २—२—१२) । "इन्द्राविष्णू अपसस्पारे" (सं. ३—२—११) । "देव रिषस्पाहि सुमित्राः" (सं. १-४-४५)। देवरिष इति किम्? "दिवा स रिषः पातु नक्तम्" (सं. १—२—१४)। "अँहसस्पातु" (सं. ३—२—४) "अति दिवस्पाहि समाववृत्रन्" (सं. १—८—१४)। अतिदिव इति किम्? "सुदानवो ददाशुषे दिवः कोशम्" (सं. २-४-८)। "इन्द्रं वो विश्वतस्परि" (सं. १—६—१२)। "इन्द्रन्नरो नेमधिता हवन्ते" (सं. १—६—१२)। "त्वमश्मनस्परि" (सं. ४-१-२)। "उद्वयं तमसस्परि" (सं. ४—१—७)। कखपकारपर इति किम्? "संख्यान्मा देवानामपसश्छित्स्महि" (सं. १—२—१०)। अनवग्रहार्थ आरम्भः ॥

## कृधिपिन्वपथेपरः ॥ २४ ॥

कृधि, पिन्व, पथ, एवंपरो विसर्जनीयः अकारादन्यस्वरपूर्वः षकारमापद्यते, अकारपूर्वः सकारम् । यथा—"उरुकृदुरु णस्कृधि" (सं. २—६—११) । "अपस्पिन्वौषधीर्जिन्व" (सं. ४—३—४) । "शर्म्म सप्रथा नमस्पथे" (सं. ४—७—१३) । एवंपर इति किम्? "नमः कपर्दिने च" (सं. ४—५—५) ॥

## [1]न सक्रघकारपरे ॥ २५ ॥

न खलु सकारपरे ककारपरे घकारपरे च कृधिपिन्वपथे इत्येवंपरो विसर्जनीयः यथाविहितमापद्यते । यथा—"ताम आ मनसः कृधि स्वाहा" (सं. २—३—९)। "मन्यासै शश्व नः कृधि । क्रत्वे दक्षा-य नः" (सं. ३—३—११)। "क्षयाय नः कृधि । घृतं घृतयोने" (सं. १—३—४)। सक्रघकारपर इति किम्? "उत नो मयस्कृधि क्षयद्वीराय" (सं. ४—५—१०) ॥

1. "न सघ" इत्येव आ० ।

पत्नीवेपतीपतेपतयेपतिःपतिम्[1] ॥ २६ ॥

इत्येवंपरो विसर्जनीयः षकारमापद्यते, अकारपूर्वः सकारम् । यथा— "प्रैतु ब्रह्मणस्पत्नी वेदिम्" (सं. ३—५—६) । पत्नीवे इति किम् ? "इन्द्रियावतः पत्नीवन्तं ग्रहं गृण्हामि" (सं. १—४—२७) । "शुभस्पती इदमहम्" (सं. ३—२—१०) । "वास्तोष्पते प्रति जानीहि" (सं. ३—४—१०) । "प्र च्यवस्व भुवस्पते" (सं. १—२—९) । "वाचस्पतये पवस्व वाजिन्" (सं. १—४—२) । "वाचस्पतिर्वाचमद्य स्वदाति नः" (सं. १—७—७) । "वाचस्पतिं विश्वकर्माणम्" (सं. ४—६—२) । पत् इत्येतावतैव सिद्धे प्रतिपदपाठः "दिवं गच्छ सुवः पते" (सं. ४—१—१०) इत्येवमादिप्रतिषेधार्थः ॥

दिवस्सहसस्परिपुत्परः ॥ २७ ॥

दिवः, सहसः[2] इत्येतयोः परिपरः पुत्परश्च विसर्जनीयः सकारमापद्यते । यथा—"दिवस्परि प्रथमं जज्ञे" (सं. १—३—१४) । "दिवस्पुत्राय सूर्याय" (सं. १-२-९) । "सहसस्पुत्रो अद्भुतः" (सं. ४-१-९) । परिपुत्पर इति किम् ? "दिवः पृथिव्याः" (सं. ३—१—१०) । "परुषः परुषः परि" (सं. ४—२—९) । सहस इति किम् ? "त्रिः परिषिञ्चन् पर्येति" (सं. ५—४—४) । यथासंख्यं तद्भवति अनेकलक्षणसिद्धे । पुत् इत्यपदग्रहणं संक्षेपार्थम् ॥

रायस्पोपरः ॥ २८ ॥

राय इत्येतस्मिन् विसर्जनीयः पोपरः सकारमापद्यते । "पशवो वै रायस्पोषः" (सं. ५—४—६) । राय इति किम् ? "विभुः पोष उत त्मना" (सं. ३—१—११) । पोपर इति किम् ? "एष्टा

---

1. "पतिंपरः" मु० । भू० । पत्नीवे, पती, पते, पतये, पतिः, पतिम् इति छेदः ।

2. "सः पुत्परः इ" आ० ।

रायः प्रेषे" (सं. १—२—११) ॥

## नमस्करो परः ॥ २९ ॥

नम इत्येतस्मिन् करोपरो विसर्जनीयः सकारमापद्यते। "तस्मै ते रुद्र संवत्सरेण नमस्करोमि" (सं. ५—५—७) । नम इति किम् ? "छन्दोभिः करोति वीर्यम्" (सं. ५-१-६) । करोपर इति किम् ? "नमः कपर्दिने च" (सं. ४—५—५) ॥

## वसुष्ककारपरः ॥ ३० ॥

वसुः इत्येतस्मिन्[1] ककारपरो विसर्जनीयः षकारमापद्यते । यथा— "स इधानो वसुष्कविः" (सं. ४—४—४) । ककारपर इति किम् ? "मयि वसुः पुरोवसुः" (सं. ३—२—१०) । वसुरिति किम् ? "शुचिर्विप्रः शुचिः कविः" (सं. १—३—१४) ॥

## नाध्वरंविश्वतोऽन्तर्जातोविविशुःपरुःपुनः ॥ ३१ ॥

अध्वरं विश्वतः, अन्तः, जातः, विविशुः परुः, पुनः एषु विसर्जनीयः [2]षकारं सकारं वा नापद्यते । यथा—"अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि" (सं. ४—१—११) । अध्वरं विश्वत इति किम् ? "इन्द्रं वो विश्वतस्परि" (सं. १—६—१२) । "महादेवमन्तःपार्श्वेन" (सं. १-४-३६) । "भूतस्य जातः पतिरेक आसीत्" (सं. ४-२-८) । "आत्मानं या आ विविशुः परुः परुः" (सं. ४—२—६) । विविशुः परुरिति किम् ? "वयुना कृणोत परुष्परुरनुघुष्या विशस्त" (सं. ४-६-९) । "पुनः पुनर्ह्यस्मान्निर्गृण्हाति" (सं. ६—५—१) ॥

## घषवति ॥ ३२ ॥

---

1. "न् का" आ० ।
2. "षस" आ० ।

धकारवति षकारवति च पदे परे विसर्जनीयः षकारं च सकारं च नापद्यते । यथा—"बहिः परिधि स्कन्दात्" (सं. २–६–६) । "उभयतः क्ष्णूर्भवति" (सं. ५—१—१) । "पुरुषः पुरुषो निधनमुपैति" (सं. ६—६—३) ॥

परिवाप्रपरः ॥ ३३ ॥

परिवा, प्र, इत्येवंपरो विसर्जनीयः सकारं नापद्यते । यथा—"इन्द्राग्नी रोचना दिवः परि वाजेषु" (सं. ४—२—११) । परिवेति किम् ? "दिव स्परि प्रथमं जज्ञे" (सं. १—३—१४) । "तस्मादितः प्रदानम्" (सं ३–२–९) । "बहिः प्राणो वै मनुष्यः" (सं. ६–१ १) ॥

न निः ॥ ३४ ॥

निरित्येतस्मिन् प्रपरस्य विसर्जनीयस्य षत्वप्रतिषेधो न भवति । अत्र षत्वमेव भवति । यथा—"प्राञ्चौ निष्क्रामतः" (सं. ६—४—१०) । "निष्प्र शुक्रशोचिषा" (सं. ६—४—१०) ॥

इति प्रातिशाख्यव्याख्यायां

छन्दोभाषायां

अष्टमोऽध्यायः ॥

———

अथ नवमोऽध्यायः ॥

ऊष्मपरोऽघोषपरो लुप्यते काण्डमायनस्य ॥ १ ॥

ऊष्मपरो विसर्जनीयः अघोषपरो लोपमापद्यते काण्डमायनस्याचार्यस्य मते। यथा—"वायव स्थोपायवस्थ" (सं. १—१—१)। "चतुस्तनां करोति" (सं. ५—१—६)। अघोषपर इति किम्? "अद्भ्यः स्वाहौषधीभ्यः" (सं. १–८–१३)। "तिस्रः श्यामा वशाः" (सं. ५–६–१२) ॥

अघोषपरस्तस्य सस्थानमूष्माणम् ॥ २ ॥

अघोषपरो विसर्जनीयः तस्य अघोषस्य सस्थानमूष्माणमापद्यते। यथा—"यःकामयेत" (सं. २–१–२)। "अग्निश्च मे" (सं. ४-७–६)। "उलूकः शशस्ते" (सं. ५–५–१८)। "अग्निस्ते तेजः" (सं. १–१–१०)। "यः पाप्मना गृहीतः स्यात्" (सं. २—१—३) ॥

न क्षपरः ॥ ३ ॥

न खलु क्षपरो विसर्जनीयः सस्थानमूष्माणमापद्यते। यथा— "घनाघनः क्षोभणश्चर्षणीनाम्" (सं. ४–६–४)। "उभयतः क्ष्णूर्भवतीतश्च" (सं. ५—१—१) ॥

कपवर्गपरश्चाग्निवेश्यवाल्मीक्योः ॥ ४ ॥

अग्निवेश्यवाल्मीक्योः शाखिनोः आचार्ययोः कवर्गपरश्च पवर्गपरश्च विसर्जनीयः सस्थानमूष्माणं नापद्यते। नेति चकारो ज्ञापयति। यथा— "यःकामयेत" (सं. २—१ २)। "अग्निः पशुरासीत्" (सं. ५—७—२६) ॥

ऊष्मपर एवैकेषामाचार्याणाम् ॥ ५ ॥

ऊष्मपर एव विसर्जनीयः सस्थानमूष्माणमापद्यते। यथा—"सिंधोः शिंशुमारः" (सं. ५–५–११)। "यस्यैवं विदुषः षोडशी" (सं. ६--६ -११)॥

न प्लाक्षिप्लाक्षायणयोः ॥ ६ ॥

नेति प्रतिषेधः । प्लाक्षिप्लाक्षायणयोराचार्ययोः कवर्गपरश्च ऊष्मपरो विसर्जनीयः न खलु सस्थानमूष्माणमापद्यते । यथा—"यः कामयेत" (सं. २—१—२)। "अग्निः पशुरासीत्" (सं. ५—७—२६) "आशुः शिशानो वृषभः" (सं. ४—६—४) । "यः सोमं वमिति" (सं. २—३—२)। "कृकलासः शकुनिः पिप्पका" (सं. ५–५–१९) ॥

ओकारभः सर्वोऽकारपरः ॥ ७ ॥

[1]अःसर्वो विसर्जनीयः ओकारमापद्यते अकारपरः । यथा—"उप प्रयन्तो अध्वरम्" (सं. १—५—५)। "प्र सो अग्ने तवोतिभिः" (सं. ३—२—११)। "सोऽब्रवीत्" (सं. २—१—२) । अस्सर्व इति किम्? "वर्णस्य विकारलोपौ" (१—५६) इति विसर्जनीयस्य विकारोत्पत्तिः स्यात् अकारपूर्वस्य । तस्मादःसर्व इत्यारभ्यते ॥

घोषवत्परश्च ॥ ८ ॥

अःसर्वो विसर्जनीयः [2]ओकारमापद्यते घोषवत्परः । "देवो वः सवितोत्पुनातु" (सं. १—१—५)। "गन्धर्वो विश्वावसुः पर्यमुष्णात्" (सं. ६—१—६) ॥

अवर्णपूर्वस्तु लुप्यते ॥ ९ ॥

अवर्णपूर्वो विसर्जनीयः लुप्यते। तुशब्दस्य प्रयोजनमुच्यते— "ओकारमः सर्वोऽकारपरः" इति प्रत्यक्षोऽयं विधिः। "घोषवत्परश्च" इत्यानु-

---

1. अस्सर्वः इति अकारेण सहेत्यर्थः। अकारेण सहितो विसर्जनीय इति यावत्।
2. "आका" आ० ।

मानिक इति ऊकार एव परनिमित्तमनुवर्त्तते । सचानेन तुशब्देन निवर्त्यते । तस्मिन् प्रत्यक्षे निवृत्ते आनुमानिकोऽनुवर्त्तते बाधकाभावात् । अवर्णपूर्वो विसर्जनीयः स्वरपरं निवर्त्तयित्वा घोषवत्परो लोपं विधत्ते । यथा—"देवा गातुविदः" (सं. १—१—१३) । "विचित्यः सोमा३ न विचित्या३ इति" (सं. ६—१—९) ॥

### अथ स्वरपरो यकारम् ॥ १० ॥

अस्य च "०रेफमेतेषु" (८—५) इत्यनेन च विशेषेणाश्रीयते । विरोधस्यान्त[न्निवृत्तय] कश्चिद्विशेष आश्रीयते । स च प्रत्यासत्ते-रवर्णपूर्व इति । तस्मात् त्रयाणामविरोधाभावात् (?) । अथेत्यधिकारः । अवर्णपूर्वः स्वरपरो विसर्जनीयः यकारमापद्यते । यथा—"आप उन्दन्तु जीवसे" (सं. १—२—१) ॥

### एकारोऽयम् ॥ ११ ॥

पदान्त एकारः स्वरपरः अयं विकारमापद्यते । यथा—"त एनं भिषज्यन्ति" (सं. २—३—११) ॥

### ओकारोऽवम् ॥ १२ ॥

स्वरपरः ओकारः अवं विकारमापद्यते । यथा—"विष्णवे हीदमाहरि-ष्यावः" (सं. २—४—१२) ॥

### नाकारपरौ ॥ १३ ॥

न खलु अकारपरौ एकारोकारौ अयं वा अवं वा विकारमापद्येते । विधौ प्रतिषिद्धे अन्यस्मिंश्चानारभ्यमाणे प्रकृतिर्भवति । यथा—"यत्ते अग्ने तेजस्तेन" (सं. ३—५—३) । "गो अर्घमेव सोमम्" (सं. ६—१—१०) ॥

### ऐकार आयम् ॥ १४ ॥

ऐकारः पदान्त. स्वरपरः आयं विकारमापद्यते। यथा—"आसामहा एवेमौ" (सं. ७—५—२) ॥

औकार आवम् ॥ १५ ॥

औकारः पदान्तः स्वरपरः आवं विकारमापद्यते । यथा— "तावब्रूतां मित्रावरुणौ" (सं. २—६—७) ॥

उकारोऽपृक्तः प्रकृत्या वकारोऽन्तरे ॥ १६ ॥

अपृक्त उकारः स्वरपरः प्रकृत्या भवति । वकारश्च । तयोरुकारस्वरयोरन्तरे वकार आगमो भवति । यथा—"अदन्त्युवेवास्य मनुष्याः" (सं. २—३—७)। अपृक्त इति किम्? "स्विष्टिन्नो अभिवसीयो नयन्तु" (सं. ३—१—९) ॥

न तत्तस्मात्साँहितः[1] ॥ १७ ॥

न खलु तत्, तस्मात्, इत्येताभ्यां संहित अपृक्त उकारः स्वरपरः प्रकृत्या भवति वकारागमश्च[2] । यथा—"ब्रह्मवादिनस्तद्वाहुरुत्सृज्यम्" (सं. ७—५—७)। "तस्माद्वाश्यं वारुण्यर्चा" (सं. ६—१—११)। तत्तस्मात् सांहित इति किम्? "तत् उ आहुः > तदु उवाहुः" (सं. ७—५—७) । तत्तस्मात्पूर्व इति वाच्ये संहितावचनमन्यव्यवच्छेदार्थम् ॥

ह्रस्वपूर्वो ङकारो द्विवर्णम् ॥ १८ ॥

ह्रस्वपूर्वो ङकारः स्वरपरः द्विवर्णमापद्यते द्वित्वमित्यर्थः। यथा— "न्यङ्ङ्ग्निश्चेतव्या३" (सं. ५—५—३) । ह्रस्वपूर्व इति किम्? "पराङावर्त्तते" (सं. ३—२—९) ॥

नकारश्च ॥ १९ ॥

---

1. "तम्" आ० ।
2. न भवतीति शेषः ।

ह्रस्वपूर्वस्वरपरो द्विवर्णमापद्यते । यथा—"निरवपन्निन्द्राय" (सं. २—४—२) । ह्रस्वपूर्व इति किम्? "यानग्नयोऽन्वतप्यन्त" (सं. ३—२—८) ॥

अनितिप[1]रो [2]ग्रहोख्ययाज्यापृष्ठ्यहिरण्यवर्णीयेष्वी-[3]कारोकारपूर्वो रेफमाकारपू[4]र्वस्तु यकारम् ॥ २० ॥

[5]ग्रहेषु उख्ये याज्यासु पृष्ठ्येषु हिरण्यवर्णीये ईकारपूर्वः ऊकारपूर्वो वा नकारो रेफमापद्यते। आकारपूर्वो यकारं इतिशब्दादन्यस्वरपरः । "आददे ग्रावा" (सं. १—४—१) इत्येतस्मादनुवाकात् प्रभृति यावत् "सजोषा इन्द्र" (सं. १—४—४२) इति ग्रहसंज्ञा भवति[6] । अग्निकाण्डस्य प्रथमद्वितीयौ प्रश्नौ उत्तमाभ्यामनुवाकाभ्यां विना उख्यसंज्ञौ भवतः। "उभा वामिन्द्राग्नी" (सं. १—१—१४) इत्येवमादीनां प्रश्नोत्तमा-नुवाकादीनां यावत् "अग्निर्वृत्राणि" (सं. ४—३—१३) इति "युक्ष्वाहि" (सं. २—६—११) इत्येतस्य चानुवाकस्य याज्येति संज्ञा भवति । "समिद्दि-शाम्" (सं. ४—४—१२), "जीमूतस्य" (सं. ४—६—६), "यदक्रन्दः" (सं. ४—६—७), "मा नो मित्रः" (सं. ४—६—८), "ये वाजिनम्" (सं. ४—६—९), "अग्नेर्मन्वे" (सं. ४—७—१५), "सामिध्दो अञ्जन्" (सं. ५—१—११), "गायत्री" (सं. ५--२--११), "कस्त्वा" (सं. ५—२—१२), इत्येतेषामनुवाकानां पृष्ठ्यसंज्ञा भवति । "हिरण्यवर्णाः" (सं. ५--६—१) इति हिरण्यवर्णीयः "हिरण्यवर्णाः शुचयः" इति हिरण्यवर्णीसंज्ञो भवति । यथा ग्रहेषु— "जहि शत्रूँ रपमृधः" (सं. १—४—४२) । ग्रहादिष्वाकारपूर्वस्य यथा

1. "अदिति" आ० ।
2. "गृहो" आ० ।
3. "कार ऊकार" आ० । वै० ।
4. "र्वश्च" मु० । भू० ।
5. "गृहे" आ० ।
6. "वन्ति" आ० ।

तदुदाहरणानि द्रष्टव्यानि । "मरुत्वाँ इन्द्र वृषभो रणाय" (सं. १—४—१९) । [1]उख्ये यथा—"मधुमाँ अस्तु सूर्यः" (सं. ४—२—९) । [2]याज्यासु यथा—"राजेवामवाँ इभेन" (सं. १—२—१४) । [3]पृष्ठ्ये यथा—"जघनाँ उप जिघ्नते" (सं. ४—६—६) । हिरण्यवर्णीये यथा[4]—"सर्वाँ अग्नीँ रप्सुषदः" (सं. ५—६—१) । अनितिपर इति किम्? "अभ्यवर्त्तन्त दस्यून्" (सं. १—६—१२) । "इडावानितीडावान्" (सं. ३—१—११) । ग्रहादिष्विति किम्? "त्रीनिमाँल्लोकान्" (सं. ७—३—२) । "पशूनेवाव रुन्धे" (सं. ५—१—१) । "तानिन्द्रोऽन्तर्यामेण" (सं. ६—४—६) । प्रकृ + + + कारयोर्विकारयोः सम्बद्धस्तुशब्दः प्रकृतवर्णत्वं विनिवर्त्तयति ॥

**मर्त्यानुद[5]यानमृतान्दुर्या[6]नसोमपूर्वः सो अस्मानविमान् गोमान्मधुमान् हविष्मान् हूतमानार्षेचिकित्वानिडावान् कक्षीवान् बाणवान् हिपयस्वान् वशान् विद्वानमित्रानरान्[7] पोषान् महाँश्च ॥ २१ ॥**

इत्येतेषु ग्रहणेषु इति शब्दादन्यस्वरपरः नकारो यकारमापद्यते । यथा— "अमर्त्यो मर्त्याँ आ विवेश" (सं. ५—७—९) । "सविता ज्योतिरुदयाँ अजस्रम्" (सं. ४—६—३) । उदयानिति किम्? "वयोभिरेवा यानवरुन्धे" (सं. ५—२—१०) । "उदस्थाममृताँ अनु" (सं. १—२—८) ।

---

1. उख्ये यथा इति नास्ति । आ० ।
2. याज्यासु यथा इति नास्ति । आ० ।
3. पृष्ठ्ये यथा इति नास्ति । आ० ।
4. हिरण्यवर्णीये यथा इति नास्ति । आ० ।
5. "यन" आ० ।
6. "र्याणसो" आ० ।
7. "त्रानुरा" आ० ।

"भद्रान्दुर्याँ अभ्येहि" (सं. १—६—३)। न सोमपूर्वः। नेति प्रतिषेधः। दुर्यानित्येतस्मिन् सोमपूर्वो न खलु नकारो यकारमापद्यते। यथा— "प्रचरा सोम दुर्यानदित्याः" (सं. १—२—१०)। "सो अस्माँ अधिपतीन् करोतु" (सं. १—६—६)। सो अस्मानिति किम्? "इन्द्रो अस्मानस्मिन्" (सं. ३—१—९)। "अविमाँ अश्वी" (सं. १-६-६)। "गोमाँ अग्ने" (सं. १—६—६)। "मधुमाँ इन्द्रियावान्" (सं. ३—१—१०)। अविमान् गोमान् मधुमान् इति किम्? "पशुमानेव भवति" (सं. ६—२—६)। "अध्वरो हविष्माँ आ विवासति हविष्माँ अस्तु" (सं. १—३—१२)। हूतमानार्षे। हूतमानित्येतस्मिन् ग्रहणे आर्षस्वरपरो नकारो यकारमापद्यते। यथा—"युक्ष्वा हि देवहूतमान्" (सं. ५-५-३)। "युक्ष्वाहि देवहूतमाँ इत्युखायां जुहोति" (सं. ५-५-३)। आर्ष इति किम्? "देवहूतमानिति देव-हूतमान्" (सं. ५—५—३)। आर्षग्रहणसामर्थ्यात् इतिशब्दपरोऽपि नकारो यकारमापद्यते। आर्षे समपाठ इत्यर्थः। "चिकित्वाँ अनु मन्यताम्" (सं. ३—१—४)। "इडावाँ एषः" (सं. १—६—६)। "कक्षीवाँ औशिजः" (सं. ५—६—५)। "विशल्यो बाणवाँ उत" (सं. ४—५—१)। इडावान् कक्षीवान् बाणवानिति किम्? "उर्जस्वान् पयस्वान् इत्याह" (सं. १—७—३)। "करोति रसवानेव भवति" (सं. २—२—४)। "समसृक्ष्महि पयस्वाँ अग्न आगमम्" (सं. १—४—४५)। हिपयस्वानिति किम्? "ऊर्जस्वान् पयस्वानित्याह" (सं. १—७—३। ऊर्जःपयस्वानूर्जस्वानित्यत्र यकारोत्पत्तिर्न भवति। कस्मात्? विकृत[1] उत्तरत्र वक्ष्यामः (?)। "स्तुतो यासि वशाँ अनु" (सं. १—८—५)। "अथापितॄँ सुविदत्राँ अपि" (सं. १—८—५)। "अराँ इवाग्ने" (सं. २—५—९)। "पोषाँ अपुष्यत्" (सं. ७-१-९)। "अग्ने महाँ असि" (सं. २—५—९)॥

---

1 हिग्रहणादिति स्यात्।

इन्द्रोमेऽकरूद्वमिहाऽप्येत्वगन्मेडेऽन्यानायजिष्ठ-
आचर्त्वकुर्वतादु[1]हददितिरग्रेऽधरान्थ्सपत्नानलंपरश्च ॥ २२ ॥

इन्द्रोमे, अकः, ऊद्वम्, इहा, अप्येतु, अगन्म, ईडेऽन्यान्, आयजिष्ठ, आच, ऋतु, अकुर्वत, अदुहत्, अदितिः, अग्रे,अधरान्थ्सपत्नान्, अलम् । इन्द्रोमे इत्येवमादिपरो नकारः आकारपूर्वो यकारमापद्यते । यथा— "सपत्नाँ इन्द्रो मे" (सं. १—१—१३)। इन्द्रो मे इति किम् ? "युष्मा-निन्द्रो वृणीत" (सं. १—१—५) । "निग्राभेणाधराँ अकः" (सं. १—१—१३)। "देवाँ ऊद्वम्" (सं. १—३—८) । "अग्ने देवाँ इहावह" (सं. १—३—१४) । इहा इति किम् ? "यज्ञिया-निह यान् हवामहे" (सं. १—५—१०) । "घर्मो देवाँ अप्येतु" (सं. १—५—१०) । अप्येत्विति किम् ? "अथो य एवं विद्वानपि जन्येषु" (सं. ६—१—६)। "सुवर्देवाँ अगन्म" (सं. १—७—९)। "ईडामहै देवाँ ईडेऽन्यान्" (सं. २—५—९) । "यष्टा देवाँ आयजिष्ठः" (सं. ४—३—१३) । "देवाँ आ च वक्षद्यक्ष-दग्निः" (सं. ४—६—३) । आयजिष्ठ आचेति किम् ? "यानाऽवह उशतो देव" (सं. १—४—४४) । "देवाँ ऋतुभिः कल्पयाति" (सं. ४—७—१२)। "पशून्वित्त्वा कामाँ अकुर्वत" (सं. १—५—९)। "यज्ञो असुराँ अदुहत्तेऽसुराः" (सं. १—७—१) । "विवस्वाँ अदितिर्दे-वजूतिः" (सं. १–५–६)। "अग्निस्ताँ अग्रे प्रमुमोक्तु" (सं. ३–१–४)। "कृण्वानो अन्यान् अधरान्थ् सपत्नान्" (सं. ३—२—८) । अधरान् सपत्नानिति किम् ? "पूर्वजान् भ्रातृव्यानधरान् सादयामि" (सं. ३—५—३)। "पुरोडाशाँ अलङ्कुरु इति" (सं. ६—३—१)। अत्राह—पदग्रहणे परपदग्रहणेन किं प्रयोजनम् ? अत्रोच्यते—अनार्षे संविधानेऽग्रहणस्य च कथं नित्यं यकारोत्पत्तिः स्यात् नैमित्तिकस्य च

---

1. "हादि" आ० । "हरदि" भू० ।

निमित्तापेक्षेऽपि । यथा ग्रहणस्य—"अमर्त्यो मर्त्यां आ विवेश" (सं. ५—७—९) । "उदस्थाममृतां अनु" (सं. १—२—८) । "गोमाँ अग्नेऽविमाँ अविमाँ अग्ने" (सं. १–६–६) । अपदग्रहणस्य—"अग्निस्ताँ अग्रे" (सं. ३—१—४) । एवं नैमित्तिकस्य । एवं नकारस्य यकारोत्पत्तिः सर्वत्र द्रष्टव्या ॥

न रश्मीञ्श्रपयान् यमान् पतङ्गान् समानानर्चान्य-जीयान् ॥ २३ ॥

रश्मीनित्येवमादिषु ग्रहणेषु न खलु नकारः रेफं वा यकारं वा आपद्यते । यथा—"सूर्यस्य पुरुत्रा च रश्मीननु" (सं. ४—१—२) । "अदितिः श्रपयानिति" (सं. ४–१–५) । "सुयामानूतये" (सं. ४-७-१५) । "पतङ्गानसन्दितो विसृज" (सं. १—२—१४) । "समानानुशन्नम उशतः" (सं. ४–३–१३) । "अर्चानिन्द्र ग्रावाणः" (सं. १–६–१२) । "यजीयानुपस्थे" (सं. १—३—१४) ॥

उदथापरश्च ॥ २४ ॥

उत्, अथा इत्येवंपरो नकारः यकारं नापद्यते । यथा—"अमित्रानुन्नयामि" (सं. ४—१—१०) । "विद्वानथा भव" (सं. ३–२–११) । "अनितिपर०" (९–२०) इत्यादिना प्राप्तिः । अथा इति किम् ? ....... ॥

इति नवमोऽध्यायः ॥

———

अथ छन्दोभाषायां दशमोऽध्यायः ॥

## अथैकमुभे[1] ॥ १ ॥

अथेत्यधिकारः । उभयोरेकत्वमधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

## दीर्घँ समानाक्षरे सवर्णपरे ॥ २ ॥

उभे सवर्णे संहितायां क्रियमाणायां एकं दीर्घमापद्यते, यत्र सवर्णमक्षरं पूर्वं भवति सवर्णं च परम् । यथा—"त्वचं गृण्हीष्वान्तरितं रक्षः" (सं. १—१—८) । इवर्णस्य—"अदित्यै रास्नाऽसीन्द्राण्यै" (सं. १—१—२) । उवर्णस्य—"सूपस्था देवो वनस्पतिः" (सं. १—२—२) ॥

## अथावर्णपूर्वे ॥ ३ ॥

अथेत्यधिकारः[2] । अवर्णपूर्वे इत्येतदधिकृतं वेदितव्यम् ॥

## इवर्णपर एकारम् ॥ ४ ॥

अवर्णपूर्वे इवर्णपरे उभावप्येकारमापद्येते । यथा—"नेष्टिर्भवति न यज्ञः" (सं. २—५—५) ॥

---

1 उभे इति सामान्यविवक्षया नपुंसकनिर्देशः । पदान्तश्च पदादिश्चेत्युभौ वर्णावेकं विकारं गच्छत इत्यर्थः ।

2. अयं चाधिकारः "उपसर्गपूर्व आरम्" (१०—९) इत्यन्तः ।

उवर्णपर ओकारम् ॥ ५ ॥

अवर्णपूर्वे उवर्णपरे उभावप्योकारमापद्येते। यथा—"इषे त्वोर्जे त्वा" (सं. १—१—१)॥

एकारैकारपर ऐकारम् ॥ ६ ॥

अवर्णपूर्वे एकारपरे ऐकारपरे उभावप्यैकारमापद्येते । यथा— "सं ब्रह्मणा पृच्यस्वैकताय स्वाहा" (सं. १—१—८) । "सोमैन्द्रा बभ्रुललामाः" (सं. ५—६—१५) ॥

ओकारौकारपर औकारम् ॥ ७ ॥

अवर्णपूर्वे ओकारपरे औकारपरे वा उभावप्यौकारमापद्येते । यथा— "ब्रह्मौदनं पचेत्" (सं. ५—७—३)। औकारपरे—"दाम्नाऽपौंभन् स वा एषः" (सं. २—४—१३) ॥

अरमृकारपरे ॥ ८ ॥

अवर्णपूर्वे ऋकारपरे उभावप्यरं विकारमापद्यते। यथा—"आग्नेय्य-र्चाऽग्नीध्रम्" (सं. ३—१—६)। "याज्याया अर्धर्च एकां तथैनान्" (सं. १—६—१०) ॥

उपसर्गपूर्व आरम् ॥ ९ ॥

"अवर्णपूर्वे" (१०—३) इति वर्त्तते। तस्मादुपसर्गपूर्व इत्यविशेषो-क्तेऽपि यः अवर्णान्ते उपसर्गः तस्येह ग्रहणम् । उपसर्गपूर्वे ऋकारपरे उभावप्यारं विकारमापद्येते । यथा—" स इन्वै तमुपार्छति" (सं. १—५—९)। "अनुपाक्तोऽवार्छत्येवम्" (सं. २—६—३) । "ऋतव्या उपोपार्त्तव्याः" (सं. ५—३—१) ॥

उदात्तमुदात्तवति ॥ १० ॥

पूर्वेण वा परेण वा उदात्तवता पदेन एकादेशे क्रियमाणे उभावप्युदादात्तमापद्येते। यथा पूर्वे उदात्ते परे अनुदात्ते—"देवो वः सविता प्रार्पयतु" (सं. १-१-१)। पूर्वे अनुदात्ते परे उदात्ते—"धृष्टिरसि ब्रह्म यच्छापाग्ने" (सं. १—१—७)। पूर्वे स्वरिते परे उदात्ते—"सह स्वस्राम्बिकया तं जुषस्व" (सं. १—८—६)। एवमवर्णस्य पूर्वे उदाते परे अनुदात्ते—"दिवीव चक्षुराततम्" (सं. १—३—६)। पूर्वे अनुदात्ते परे उदात्ते उभावप्युदात्तमापद्येते। यथा—"पाहीत्याह" (सं. १—५—७)। "तनूपा ह्येषः" (सं. १—५—७)। पूर्वे स्वरिते परे उदात्ते—"वसतीतीन्द्रो हि देवानाम्" (सं. २—५—३)। एवमिवर्णस्य उवर्णस्य पूर्वे अनुदात्ते स्वरिते वा परे उदात्ते उभावप्युदात्तमापद्येते। यथा—"रेतो दधातूथ्सक्थ्योः" (सं. ७—४—१९)। "वनस्पतयोऽनूत्तिष्ठन्ति तान्" (सं. ७—४—८)। पूर्वे उदात्ते परे अनुदात्ते उदाहरणं न भवतीति न प्रदर्शितम्। कस्मात्? "सून्नीयमिव यो वै स्वार्थे ताम्" (सं. ६-२-४), "सुहोता सूद्गाता स्वध्वर्युः" (सं. ७—१—८) इत्येवमादौ "ऊभावे च" (१०—१७) इति स्वरितविधानात्। एवं समानाक्षरसंहितायां[1] एकीभावो [2]द्रष्टव्यः। अथावर्णपूर्वे, पूर्वे उदात्ते परे अनुदात्ते उभावप्युदात्तमापद्येते। यथा—"सेमान्नो हव्यदातिं जुषाणः" (सं. ४—६—६)। पूर्वे अनुदात्ते परे उदात्ते—"तं घेदग्निर्वृधावति" (सं. २—६—११)। पूर्वे स्वरिते परे उदात्ते—"सवनमुखे सवनमुखे कार्येति" (सं. ७-५-५)। एवमवर्णेवर्णयोरेकारोत्पत्तिः। अथोकारोत्पत्तौ दर्शयिष्यामः—पूर्वे अवर्णे उदात्ते उभावप्युदात्तमापद्येते परे उदात्ते—"ऊर्जस्स्थोर्जं वो भक्षीय" (सं. १—५—६)। पूर्वे स्वरिते परे उदात्ते—"उदायुषा स्वायुषो दोषधीनाम्" (सं. १—२—८)। एवमवर्णोवर्णयोरोकारोत्पत्तिः

---

1 "यां भा" आ०।

2. "वोऽन्यत्रापि द्र" इत्यावश्यकम्।

अथैकारोत्पत्तौ दर्शयिष्यामः—पूर्वे अवर्णे उदात्ते परे एकारे अनुदात्ते उभावप्युदात्तमापद्येते । यथा — "नैनं प्रत्योषति" (सं. १ – ५—९) । "सैतम्मन्त्रमपश्यत्ततो वै" (सं. १—५—४) । पूर्वे अनुदात्ते परे एकारे [1]अनुदात्ते उभावप्युदात्तमापद्येते । "एक एव यजेतैको हि प्रजापतिः" (सं. ७—२—१०) । एवमवर्णस्य एकारस्य ऐकारोत्पत्तिः । अथैकारोत्पत्तावेव दर्शयिष्यामः – अवर्ण उदात्ते परे ऐकारे अनुदात्ते उभावप्युदात्तमापद्येते । यथा—"इन्द्रियमेवैन्द्रेणाव रुन्धे" (सं. ६—६—५) । पूर्वे अनुदात्ते परे उदात्ते—"वि हि तदवैर्यतेति" (सं. ७ —१—५) । एवमवर्णस्येकारस्य ऐकारोत्पतिः । अथावर्णस्य च उत्पत्तौ अन्यतरे उदात्ते अन्यतरे अनुदात्ते स्वरिते परे उभावप्युदात्तमापद्येते । यथा—"अद्भिर्हवींषि प्रौक्षीः" (सं. २—६—५) । "दाम्नाऽपौंभन् स वा एषः" (सं. २—४—१३) । "अरुणो ह स्माहौपवेशिः" (सं. ६—१—९) । एवमवर्णस्योकारस्य औकारोत्पत्तिः । पूर्वे अवर्णे उदात्ते वा अनुदात्ते वा स्वरिते वा परे ऋकारे उदात्ते अनुदात्ते वा अरमिति विकारमुदात्तं भवति । यथा—"आग्नेय्यर्चाऽऽग्नीध्रमभि मृशेत्" (सं. ३—१ —६) । "सैवास्यर्धिः" (सं. ६—६—१०) । "ऐन्ध ऋषिष्टुत इत्याहर्षयः" (सं. २—५—९) । पूर्वे उपसर्गान्ते अवर्णे उदात्ते अनुदात्ते स्वरिते वा परे ऋकारे उदात्ते अनुदात्ते वा आरमिति विकारमुदात्तं भवति । "आर्तिमार्च्छेति" (सं. १—५—२) । "अनुपाक्तोऽवार्च्छेत्येवम्" (सं. २–६–३) । "स इन्वै तमुपार्च्छेत्यथ" (सं. १–५–९) । एकादेशे सर्वत्र स्वरिते परे उदाहरणं न भवतीति न प्रदर्शितम् । एवमेकादेशे[2] स्वरविधिः सर्वत्र द्रष्टव्या ॥

## अनुनासिके अनुनासिकम् ॥ ११ ॥

---

1. उदात्ते इति स्यात् ।
2. "देशमिकारस्य स्व" आ० ।

"अप्रग्रहाः समानाक्षराण्यनुनासिकान्येकेषाम्" (१५—६) इति येषां[1] अप्रग्रहाः समानाक्षराण्यनुनासिकानि भवन्ति तेषामेकादेशविकारे उभावप्यनुनासिकं विकारमापद्येते । यथा—"धन्वनाऽजिञ्जयेम" (सं. ४—६—६) । "सविता प्रार्पयतु" (सं. १—१—१)। "जीमूतस्येव भवंति" (सं. ४—६—६) । एवं सर्वत्र ॥

स्वरितानुदात्तसन्निपाते स्वरितम् ॥ १२ ॥

स्वरितस्य चानुदात्तस्य च सन्निपाते एकादेशे उभावपि स्वरितमापद्येते । यथा—"क्रोशातिगर्दा कन्येव तुन्ना" (सं. ३—१—११)। "छवीं छव्योपाकृताय स्वाहा" (सं. ५—७—२०) । "याज्यैषा वै सप्तपदा शक्वरी" (सं. २—६—२) । "अथ क्वास्याहवनीय इंति" (सं. ५—७—४) । इह स्वरितस्याविशेषेण[2] । अन्येषां तु अक्षरोत्पत्तिकालादूर्ध्वमक्षराणां वा पदानां वा संहितायां [3]उदात्तादनुदात्तस्य स्वरित इति विधानार्थः ॥

न धामापा[4]सिपरो बुध्निया ज्या आपूषा अमिनन्त आर्षे ॥ १३ ॥

न धा, मा, पा, एतेष्वसिपरः, बुध्निया, ज्या, आपूषा, अमिनन्त इत्येवमादिषु ग्रहणेषु आर्षे एकादेशे विकारो न भवति । एकादेशविकारे प्रतिषिद्धे नान्यस्मिंश्चारभ्यमाणे प्रकृतिवद् भवति । यथा—"स्वधा अस्युर्वीचासि" (सं. १–१–९) । "सहस्रस्य प्रमा असि" (सं. ४–४–११) ।

---

1. "षां प्र" आ० ।
2. "षेण ग्रहणे नित्यस्वरित एव गृह्यते । तस्य पदावयवानामुत्पत्तिकाल एव सम्भवात्" इति पूरणीयम् ।
3. "उदात्तात्परोऽनुदात्तः स्वरितम्" (१४—२९) ।
4. "पायिप" आ० । "पा असि" भू० ।

"धन्वान्निव प्रपा असि" (सं. २—५—१२) । असिपर इति किम् ? "अथ मेतरेभ्य ऋषिभ्यः" (सं. ३—५—२) । "स्वधेति स्व-धा" (सं. १—१—९) । "प्रपेति प्र-पा" (सं. २—५—१२) । "प्र बुध्निया ईरते" (सं. ४—३—१३) । "ज्या इयँ समने" (सं. ४-६-६) । "आ पूषा एत्वा वसु" (सं. २—४—५) । आपूषा इति किम् ? "तं पूषाऽधत्त" (सं. १—५—१) । "आ ते सुपर्णा अमिनन्त एवैः" (सं. ३-१-११) । आर्ष इति किम् ? "आ पूषा पूषा आ पूषा पूषा एतु एतु पूषा" (सं. २—४—५) ॥

## एष्टरेतने[1]मन्नोद्मन्नोष्ठेवः परो लुप्यते ॥ १४ ॥

अवर्णपूर्व इति वर्त्तते । एष्टः, एतन, एमन्, ओद्मन्, ओष्ठ, एवः, इत्येवंपर अवर्णो लुप्यते । यथा—"अशीयेष्टा रायः" (सं. १—२—११) । "शमितार उपेत न" (सं. ३—१—४) । "अपान्त्वेमन्थ्सादयामि, अपान्त्वोद्मन्" (सं. ४—३—१) । "स्वाहोष्ठाभ्याँ स्वाहा" (सं. ७—३—१६) । "ग्रहणस्य च" (१—२२) इति वचनात् ओष्ठशब्दस्य सर्वविभक्त्यन्तस्य ग्रहणं भवति । यथा—"उपयाममधरेणोष्ठेन" (सं. ५—७—१२) । "निरमिमतेवश्छन्दो वरिवः" (सं. ५—३—५) ॥

## इवर्णोकारौ यवकारं[2] स्वरपरौ[3] ॥ १५ ॥

इवर्णश्च उकारश्च स्वरपरौ यकारं च वकारं चापद्येते यथासंख्येन । यथा—"प्रत्युष्टँ रक्षः" (सं १—१—१०) । "अग्नेर्योन्यसि देवानाम्" (सं. ४—४—६) । "तत्प्रुतुद्रवभवत्" (सं. ६—२—८) ॥

---

1. "रेतनेमन्नोष्ठे" भू० ।
2. "यवकारौ ॥" मु० । भू० ।
3. स्वरपराविति नास्ति । मु० ।

## उदात्तयोश्च परोऽनुदात्तः स्वरितम् ॥ १६ ॥

उदात्तयोस्तयोरिवर्णोकारयोः परोऽनुदात्तः स्वरितमापद्यते । यथा— "विष्णुस्त्र्यक्षरेण त्रीन्" (सं. १—७—१) । " ऊत्यश्यामरीयँ रयिवः" (सं. १–३–१४) । "स्विष्टिन्नो अभिवसीयो नयन्तु" (सं. ३–१–९) । उदात्तयोरिति किम् ? "नीचा तं धक्ष्यत सं न शुष्कम्" (सं. १–२–१४) । परोऽनुदात्त इति किम् ? "यद्दच्य्ध्यक्षराणि यज्जगत्या" (सं. २–४ - ११) ॥

## ऊभावे च ॥ १७ ॥

पूर्वेणोदात्तेन परेणानुदात्तेन उभावेकीकृते स ऊकारः स्वरितो भवति । "सून्नीयमिव" (सं. ६—२—४) । "सूद्गाता स्वघ्वर्युः" (सं. ७—१—८) । "मासूत्तिष्ठन् नृघ्नोति" (सं. ७—५—२) । पूर्वेणोदात्तेनेति किम् ? "सूपस्था देवो वनस्पतिः" (सं. १—२—२) । परेणानुदात्तेनेति किम् ? "ता दिक्षूपादधत" (सं. ५—५—५) । तेन चशब्दः पूर्वस्य चोदात्तत्वं परस्य चानुदात्तत्वमन्वादिशति ॥

## न श्येती मिथुनी[1] ॥ १८ ॥

श्येती, मिथुनी, इत्येतयोर्ग्रहणयोरिवर्णः यकारं नापद्यते । यथा— "श्यैतेन श्येती अकुरुत" (सं. ५—५—८) । "न मिथुनी अभवन् तासु" (सं. ५—३—६) ॥

## लुप्येते [2]त्ववर्णपूर्वौ यवकारौ ॥ १९ ॥

अवर्णपूर्वौ स्वरपरौ यवकारौ लुप्येते । यथा— "आप उन्दन्तु

1. "मिधुनी" आ० ।

2. "तुशब्द इतरौ यवकारौ निवर्त्तयन्नादेशप्राप्तयोरेवानयोर्लोपविषयत्वं द्योतयति ।" त्रि० ।

जीवसे" (सं. १—२—१) । "ध्रुवा अस्मिन् गोपतौ स्यात" (सं. १–१–१)। "न विचित्या३ इति" (सं. ६–१–९)। एवं नकारलोपः सर्वत्र द्रष्टव्यः। वकारस्य–"वाय इष्टये दुरोणे" (सं. २—२—१२)। "तावेवास्मिन् चक्षुर्धत्तः" (सं. २—२—९) । अवर्णपूर्वत्वादिति किम् ? "अभ्यस्थात्" (सं. ४—२—८) । "अग्नेर्यान्यासि" (सं. ४—४—६)। "हृत्स्वसः" (सं. ४—२—११)। "अमर्त्यो मर्त्यान्" (सं. ५—७—९) ॥

नोख्यस्य ॥ २० ॥

उख्यो नामाचार्यः । तस्य न खलु अवर्णपूर्वौ यकारवकारौ लुप्येते। "आप उन्दन्तु" (सं. १—२—१) । "वायविष्टये दुरोणे" (सं. २—२—१२)। "तावेवास्मिन् चक्षुर्धत्तः" (सं. २—२—९) । एवं सर्वत्र ॥

वकारस्तु साङ्कृत्यस्य ॥ २१ ॥

साङ्कृत्यस्याचार्यस्य अवर्णपूर्वो वकारो न खलु लुप्यते । "वायविष्टये दुरोणे" (सं. २—२—१२) । "तावेवास्मिन् चक्षुर्धत्तः" (सं. २—२—९)। एवं सर्वत्र । [1]तुशब्दस्य प्रयोजनमुच्यते—विधौ प्राप्ते प्रतिषेध एव भवति, न विधिरिति विधिन्निवर्तयित्वा प्रतिषेधं करोति । तुशब्दस्य विनिवर्त्तकत्वात् ॥

उकारौकार[2]परौ लुप्येते[3] माचाकीयस्य ॥ २२ ॥

उकारपरौ औकारपरौ च अवर्णपूर्वौ यकारवकारौ लुप्येते। यथा—"मित्रावरुणावन्ता उत घर्मवन्ता मरुत्वन्ता अङ्गिरस्वन्ता उत विष्णुवन्ता मरुत्वन्ता जरितुः" (?) उकारपरौ—"आप उन्दन्तु" (सं. १—२—१)।

---

1. "पूर्वाचार्यमतनिवर्त्तकस्तुशब्दः" त्रि० ।
2. "कारपरो लुप्यते" भू० ।
3. लुप्येते इति इह पुनरारम्भः पूर्वसूत्रद्वयस्थितनञ्सम्बन्धशङ्कानिराकरणार्थः।

"शतक्रत उद्वँशमिव" (सं. १—६—१२)। ओकारपरौ…"या जाता ओषधयः" (सं. ४—२—६)। उकारौकारपराविति किम्? "त एनं भिषज्यन्ति" (सं. २—३—११)। "विष्णवे हीदमाहरिष्यावः" (सं. २—४—१२)। इति माचाकीयस्याचार्यस्य मतम्॥

लेशो वात्सप्रस्यैतयोः॥ २३॥

वात्सप्रो नामाचार्यः। तस्यावर्णपूर्वयोः यकारवकारयोः लेशः स्यात्। एतयोरित्युकारौकारौ निर्दिशति। लेशो नाम नाश इत्यर्थः। लुप्तवदुच्चार्यते[1]। एतान्येवोदाहरणानि॥

न प्लुतप्रग्रहौ॥ २४॥

(?)"…[विचार्य]माणानां प्लुत" इति प्लुतो भवति। न खलु प्लुतं च प्रग्रहं च अयं वा अवं वा एकादेशं वा विकारं वा आपद्यते। यथा विधौ प्रतिषिद्धे अन्यस्मिंश्चानारभ्यमाणे प्रकृतिवद्भवति। यथा प्लुतः—"अस्तुही ३ इत्यब्रूताम्" (सं. ७—१—६)। "चेतव्याऽ३ उत्ताना" (सं. ५—५—३) इति प्रग्रहः। "ते एनमभि समनह्येताम्" (सं. २—५—६)। "इन्दो इन्द्रियावतः" (सं. १—४—२७)। "मानवी ऋचौ धाय्ये" (सं. २—२—१०)॥

परश्च॥ २५॥

लुप्तयोश्च यकारवकारयोः परस्य स्वरस्य पुनः सिद्धिर्न [2]भवति। यथा—"आप उन्दन्तु" (सं. १—२—१)। "अग्र इमं यज्ञम्" (सं. १-१-५)। लुप्तयोर्यकारवकारयोरिति किम्? "सौषधीरनु रुध्यसे" (सं. ४—२—३)। "सैनाऽनीकेन" (सं. ४—३—१३) इति॥

इति प्रातिशाख्यव्याख्यायां छन्दोभाषाख्यायां
माहिषेयव्याख्यायां दशमोऽध्यायः॥

---

1. एकादेशस्तु श्रूयत इति तात्पर्यम्।
2. सन्धिर्न भवतीत्यर्थः।

## अथैकादशोऽध्यायः ॥

### लुप्यते त्वकार एकार ओकारपूर्वः ॥ १ ॥

एकारपूर्व ओकारपूर्वश्च अकारो लुप्यते । यथा—"तेऽवर्धन्त स्वतवसः" (सं. ४—१—११)। "सोऽब्रवीत्" (सं. २—१—२) ॥

### अथालोपः ॥ २ ॥

अथेत्यधिकारः । अलोप इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

### धातारातिरुपवाजपेयजुष्टश्येनायोरव्यध्रुवाक्षितिरियमेव-साया।ग्निर्मूर्धारुद्रप्रथमोपोत्तमाविकर्षविहव्याहिरण्यवर्णीयया-ज्यामहापृष्ठ्ये[2] ॥ ३ ॥

इत्येतेष्वनुवाकेषु एकारपूर्व ओकारपूर्वो वा अकारो न लोपमापद्यते । यथा धातारातिः—"प्रजापतिर्निधिपतिः नो अग्निः" (सं. १–४–४४) । धातारातिरिति किम्? "धाता देवेभ्य" इत्यन्यस्यां शाखायाम्। "उप प्रयन्तो अध्वरम्" (सं. १–५–५) । "आरे अस्मे च शृण्वते" (सं. १–५–५) । वाजपेय इति "देव सवितः प्रसुव" (सं. १—७—७) इत्येतत्प्रभृति यावत् "उपयाम गृहीतः" (सं. १–७–१२) इति वाजपेयसंज्ञा भवति । "ते नो

---

1. "साग्नि" आ० ।

2 "पृष्ठे" आ० ।

अर्वन्तो हवनश्रुतः" (सं. १—७—८)। "प्रसवः सुषुवे अग्रे" (सं. १–७–१०)। "जुष्टो वाचो भूयासम्" (सं. ३–१–१०)। "यो द्रप्सो अँशुः पतितः"(सं. ३–१–१०)। "श्येनाय पत्वने" (सं. ३–२–८)। "नमः पितृभ्यो अभि ये नो अख्यन्" (सं. ३—२—८)। उख्ये—"नमो अस्तु सर्पेभ्यः" (सं. ४–२–८)। "शृण्वन्ति विश्वे अमृतस्य" (सं. ४–१–१)। "ध्रुवक्षितिः" (सं. ४–३–४)। "ऊर्मिर्द्रप्सो अपामसि" (सं. ४–३–४)। ध्रुवाक्षितिरिति किम्? ध्रुवेत्यकारान्तस्य यदि ग्रहणं स्यात् "ध्रुवोऽसि ध्रुवोऽहम्" इत्यस्यापि ग्रहणं भवति। "इयमेव सा या" (सं. ४—३—११)। इयमेव सेति किम्? "इयं ते शुक्र तनूः" (सं. १–२–४)। "सगर्भ्योऽनु सखा" (सं. १–२–४) इत्येतेन पदेन ग्रहणं भवति। [1]मन्दधियामनुग्रहाय "ईयुष्टे" (सं. १—४—३३) इत्यनुवाकश्च। "ओ ते यन्ति अपरीषु पश्यान्" (सं. १–४–३३)। "अग्निर्मूर्द्धा दिवः" (सं. ४–४–४)। "एना वो अग्नि-न्नमसा" (सं. ४—४—४)। अग्निर्मूर्द्धेति किम्? "अग्निर्मा दुरिष्टात्" (सं. १—६—३)। "यो मेऽन्ति दूरेऽरातीयति" (सं. १—६—३)। रुद्राणामनुवाकानां प्रथमश्चोपोत्तमश्च रुद्रप्रथमोपोत्तमौ। उपोत्तममित्युप समीपवर्त्ति। रुद्रप्रथमे—"नमो अस्तु नीलग्रीवाय" (सं. ४—५—१)। उपोत्तमे—"द्रापे अन्धसस्पते" (स. ४—५—१०)। "उत मा नो अर्भकं मा न" (सं. ४–५–१०)। "अश्मन्नूर्जम्" (सं. ४–६–१) इत्यतः प्रभृति पञ्चानामनुवाकानां विकर्षसंज्ञा भवति। विकर्षे—"पावको अस्मभ्यं शिवः" (सं. ४—६—१)। "अग्निर्भवे हविहव्य" इति त्रयाणा-मनुवाकानां विहव्यसंज्ञा भवति। "द्रविणं वाजो अस्मे" (सं. ४–७–१२)।

---

1. "'सा या' इति पदद्वयं मन्दधियां प्रतिपत्त्यर्थमिति केचित्। अन्ये त्वन्यथापि कथयन्ति—अस्यानुवाकस्य शेषभूता या ऋगन्यत्र स्थिता सापि स्वीकर्तव्येति। यथा—अपरीषु पश्यान्"। त्रि०।

"सत्या मनसो मे अस्तु" (सं. ४—७—१४)। हिरण्यवर्णीये—"एको देवो अप्यतिष्ठत्" (सं. ५—६—१)। याज्यायाम्—"कामेन कृतो अभि" (सं. १-१-१४)। महापृष्ठ्य इति "समिद्दिशाम्" (सं. ४-४-१२), "जीमूतस्य" (सं. ४ - ४—६), "यदक्रन्दः" (सं. ४—६—७), "मा नो मित्रः" (सं. ४—६—८), "ये वाजिनम्" (सं. ४-६-९), "अग्नेर्मन्वे" (सं. ४—७—१५) इत्येतेषां षण्णामनुवाकानां महापृष्ठ्य-संज्ञा भवति। महापृष्ठ्ये—"विष्ठया स्तोमो अन्हाम्" (सं. ४-४-१२)। "विवस्वद्वाते अभि नो गृणाहि" (सं. ४—४—१२)। महापृष्ठ्य इति किम्? "पृथिवी तेऽन्तरिक्षेण वायुः" (सं. ५—२—१२)॥

## अँहसोऽहँतिः अनिष्टृतोऽवन्त्वस्मानवद्यादहनि च ॥४॥

अहनि, धातारातिरादिष्वेवान्वादिश्यते। अंहस इत्येवमादिषु ग्रहणेषु न खलु एकार ओकारपूर्वो वा अकारो लोपमापद्यते। यथा—"प्रमुञ्चन्तो नो अँहसः" (सं. ४—३—१३)। "परिद्वेषसो अँहतिः" (सं. २-६-११)। "उपसत्ता वर्धतां ते अनिष्टृतः" (सं. ४—१—७)। "अधि ब्रुवन्तु ते अवन्त्वस्मान्" (सं. २—६—१२)। अवन्त्वस्मानिति किम्? "ते नोऽवन्तु पितरो हवेषु" (सं. २-६-१२)। "मित्रमहो अवद्यात्" (सं. १-२-१४) "शुचिः शुक्रे अहन्योजसीना" (सं. ४-४-१२)। "यवनहपरः स्वरपरेषु" (१२—४) इति लोपे प्राप्ते अयमारभ्यते। अन्वादेशः किमर्थः? "स एवैनं पाप्मनोऽहँसो मुञ्चति" (सं. २—२—७)॥

## अनु घर्मास आपो मर्त्तो रथ[1]स्त्वोदत्तो वातःपूर्वः ॥

घर्मासः, आपः, मर्त्तः, रथः, त्वः, दत्त, वातः, इत्येवंपूर्वः अनु इत्येतस्मिन् ग्रहणे अकारो न खलु लोपमापद्यते। यथा—"त्रयो घर्मासो

---

1. "थस्वोद" आ०।

अनु ज्योतिषागुः" (सं. ४—३—११)। "तस्मादापो अनु स्थ न" (सं. ५—६—१)। "यदा ते मर्त्तो अनु भोगम्" (सं. ४—६—७)। "अनु त्वा रथो अनु" (सं. ४—६—७)। "पीयति त्वो अनु त्वो गृणाति" (सं. ४—२—३)। "शुक्रमादत्ते अनु हाय" (सं. ३—२—२)। "तद्वातो अनु वातु ते" (सं. ५—५—७)। एवंपूर्व इति किम्? "अनु गावोऽनु भगः कनीनाम्" (सं. ४—६—७)। "लुप्यते त्वकार एकार ओकारपूर्वः" (११—१), "यवनहपरः स्वरपरेषु" (१२—४) इत्येतयोरपवादोऽयम् ॥

अभिवात्वपश्च ॥ ६ ॥

"अन्वादेशोऽन्यस्य" (१—५९) इति वचनात् वातःपूर्व इति चशब्दो ज्ञापयति। अभिवातु, अप इत्येतयोर्वातःपूर्व अकारो न खलु लोपमापद्यते। यथा—"मयोभूर्वातो अभि वातु" (सं. ७—४—१७)। अभिवात्विति किम्? "वातोऽभि पवते वातनामानि" (सं. ५—४—९)। "यद्वातो अपो अगमत्" (सं. ७—४—२०)। वातःपूर्व इति किम्? "अव रुन्धेऽपोऽग्रेऽभि व्याहरति" (सं. ६—४—३) ॥

अन्वगमच्च ॥ ७ ॥

अनु, अगमत्, इत्येतयोः अपपूर्वोऽकारो न खलु लोपमापद्यते। यथा—"अपो अन्वचारिषम्" (सं. १-४—४५)। "यद्वातो अपो अगमदिन्द्रस्य" (सं. ७—४—२०)। अपः पूर्व इति किम्? "पशवोऽनूदायन् स उन्नतः" (सं. २—१—५) ॥

आपःपूर्वोऽद्भिरपान्नपादस्मान् ॥ ८ ॥

अद्भिः, अपान्नपात्, अस्मानित्येतेषु ग्रहणेषु आपःपूर्व अकारो न खलु लोपमापद्यते। यथा—"समापो अद्भिरग्मत" (सं. १—१—८)

"देवीरापो अपान्नपात्" (सं. १—२—३) । अपान्नपादिति किम्? "वारुणीरापोऽपां च खलु" (सं. २—१—९) । "आपो अस्मान्मातरः शुन्धन्तु" (सं. १—२— १) । आपःपूर्व इति किम्? "सोऽस्मान् पातु तस्मै नमः" (सं. ५—५—५) ॥

## राये सः इन्द्र[1]पूर्वश्चाकारपरे ॥ ९ ॥

राये, सः, इन्द्रः, इत्येवंपूर्वः अस्मानित्येतस्मिन् ग्रहणे अकारपरो अकारो न लोपमापद्यते । अस्मानिति चशब्दोऽन्वादिशति । अकारपर इति सःइन्द्र इत्येतयोरेव विशेषणम्, राये इत्येतस्यासम्भवात्[2] । "अग्ने नय सुपथा राये अस्मान्" (सं. १—१—१४) । "सो अस्माँ अधिपतीन् करोतु" (सं. १—६—६) । "इन्द्रो अस्मानस्मिन् द्वितीये सवने" (सं. ३—१—९) । रायेसः इन्द्रःपूर्व इति किम्? "योऽस्मान् द्वेष्टि यं च वयम्" (सं. १—१—९) । अकारपर इति किम्? "सोऽस्मान्" (सं. ५—५—५) ॥

## तेपूर्वोऽद्यान्धोऽशुरग्ने ॥ १० ॥

अद्य, अन्धः, अंशुः, अग्ने इत्येतेषु ग्रहणेषु अकारस्तेपूर्वः न खलु लोपमापद्यते । यथा—"इमं पशुं पशुपते ते अद्य" (सं. ३—१—४) । "उपो ते अन्धो मद्यमयामि" (सं. १—४—४) । "अँशुना ते अँशुः" (सं. १—२—६) । "यत्ते अग्ने तेजस्तेन" (सं. ३—५—३) । अद्यान्धोऽँशुरग्न इति किम्? "तेऽग्नये प्रवते पुरोडाशम्" (सं. २–४–१) । तेपूर्व इति किम्? "अभिषूयमाणस्य प्रथमोऽशुः स्कन्दति" (सं. ३–१–८) ॥

---

1. "न्द्रःपू" मु० ।
2. "रायेपूर्वस्योदाहरणं शाखान्तरे । अथवा जटायां भवति । यथा—'राये अस्मानस्मान् राये राये अस्मान्' । संहितायां तु नोदाहरणम्, अकारपरत्वाभावात् ।" त्रि० ।

मेपूर्वश्च ॥ ११ ॥

अग्ने इत्येतस्मिन् ग्रहणे मेपूर्वश्चाकारो न लोपमापद्यते । यथा— "यन्मे अग्ने अस्य यज्ञस्य" (सं. १—६—२) । मेपूर्व इति किम्? "तेन त्वादधेऽग्ने अङ्गिरः" (सं. १—२—१२) । अन्वादेशः किमर्थः ? "प्राणश्च मेऽपानश्च मे" (सं. ४—७—१) ॥

अस्याश्विनाऽपरा च ॥ १२ ॥

अस्य, आश्विना, अपरा इत्येतेषु ग्रहणेषु च मेपूर्व अकारो लोपी न भवति। यथा—"देवा हविषो मे अस्य" (सं. १—५—१०) । "पुनर्मे आश्विना युवम्" (सं. ३—२—५)। "यद्वा मे अपरागतम्" (सं. ६—६—७) । अन्वादेशः किमर्थः ? "कोऽस्येश्वरः" (सं. २—६—७) ॥

नःपूर्वोऽसदग्निरघान्तमोऽभ्यस्मिन्नद्यपथि ॥ १३ ॥

असत्, अग्निः, अघ, अन्तमः, अभि, अस्मिन्, अद्यपथि, एतेषु ग्रहणेषु नःपूर्वोऽकारो न लोपमापद्यते । यथा—"सुपारा नो असद्वशे" (सं. १—२—३) । "अयन्नो अग्निर्वरिवः कृणोतु" (सं. १—३—४)। "रक्षा माकिर्नो अघशँस ईशत" (सं. १—४—२४) । "अग्ने त्वन्नो अन्तमः" (सं. १—५—६) । "स्विष्टिन्नो अभि वसीयो नयन्तु" (सं. ३—१—९) । "शिक्षा नो अस्मिन् पुरुहूत" (सं. ७—५—७)। "तेभिर्नो अद्य पथिभिः" (सं. ७—५—२४) । अद्यपथीति किम् ? "नोऽद्य वसु वसतीतीन्द्रः" (सं. २—५—३) । नःपूर्व इति किम् ? "सोऽग्निर्जातः प्रजाः शुचार्पयत्" (सं. ५—१—४) । एतेष्विति किम् ? "ते नः पान्तु ते नोऽवन्तु" (सं. १—२—३) ॥

## नमःपूर्वोऽ[1]ग्रेऽश्वेभ्योऽग्रियाय ॥ १४ ॥

अग्रे, अश्वेभ्यः, अग्रियाय, एतेषु ग्रहणेषु नमःपूर्व अकारो लोपं नापद्यते । यथा—"नमो अग्रे वधाय च" (सं. ४—५—८)। "नमो अश्वेभ्योऽश्वपतिभ्यश्च" (सं. ४—५—३) । "नमो अग्रियाय च प्रथमाय च" (सं. ४—५—५) । नमःपूर्वं इति किम् ? "अपोऽग्रेऽभि व्याहरति" (सं. ६—४—३) । एतेष्विति किम् ? "नमोऽग्नयेऽप्रतिविद्धाय" (सं. १—५—१०) ॥

## [2]आविन्नःसोमःपूर्वो ग्निपरः ॥ १५ ॥

अकारो न खलु लुप्यते । यथा—"आविन्नो अग्निर्गृहपतिः" (सं. १–८–१२) । "उपास्तावः कलशः सोमो अग्निः" (सं. ३–२–४) । एवंपूर्व इति किम् ? "योऽस्य स्वोऽग्निस्तमपि" (सं. ५—७—९) । अग्निपर इति किम् ? "आविन्नोऽयमसावामुष्यायणः" (सं. १–८–१२) ॥

## धीरासोऽदब्धास एकादशास ऋषीणां पुत्रः शार्यातेऽ[3]षाढः पितारः पृथिवी यज्ञ आसतेये गृण्हाम्यग्रे वाँ एषः[4] संस्फानो युवयोर्यः पृष्ठे पतिर्वो गोशुष्मः पुवः समिध्द ऋषभः पाथो वचो वर्षिष्ठे जुषाणो [5]यो रुद्रो वृष्णः पूर्वः ॥ १६ ॥

धीरासः, अदब्धासः, एकादशासः, ऋषीणां पुत्रः, शार्याते, अषाढः, पितारः, पृथिवीयज्ञे,आसतेये, गृण्हाम्यग्रे, वाँ एषः, जज्ञे, संस्फानः, युवयोर्यः,

---

1. "पूर्वेऽग्रे" आ० ।
2. आविन्नः, सोमः, एवंपूर्वोऽकारो ग्निपरो न लुप्यते । ग्नीति पदैकदेशः ।
3. "ते आ" भू० ।
4. "ष जज्ञे सं" मु० । भू० ।
5. "णो रु" आ० ।

पृष्ठे, पतिर्वः, गो, शुष्मः, पुवः, समिद्धः, ऋषभः, पाथः, वचः, वर्षिष्ठे, जुषाणः, योरुद्रः, वृष्णः । धीरासः इत्येवमादिपूर्वः अकारः न खलु लोपमापद्यते । यथा—"तान्धीरासो अनुदृश्य यजन्ते" (सं. १–१–९)। "अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम्" (सं. १–१–१०)। "एकादशासो अप्सुषदः" (सं. १—४—११)। "ऋषीणां पुत्रो अधिराज एषः" (सं. १—३—७)। ऋषीणां पुत्र इति किम्? "यस्य पुत्रोऽजातः स्यात्" (सं. १—५—८)। "यथा शार्याते अपिबः सुतस्य" (सं. १—४—१८)। "अषाढो अग्निः" (सं. १—५—१०)। "त्वत्पितारो अग्ने देवाः" (सं. १—५—१०)। "पृथिवी यज्ञे अस्मिन्" (सं. १—६—५)। पृथिवी यज्ञ इति किम्? "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" (सं. ७—१—१)। "यज्ञहनः पृथिव्याम्" (सं. ३–५–४)। "अध्यासते ये अन्तरिक्षे" (सं. ३–५–४)। आसते ये इति किम्? "नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे" (सं. ४–५–११)। "मयि गृण्हाम्यग्रे अग्निम्" (सं. ५–७–९)। गृण्हाम्यग्र इति किम्? "अष्टौ कृत्वोऽग्रेऽभिषुणोति" (सं. ६–४–५)। "इडावाँ एषोऽसुरः" (सं. १—६—६)। वां एष इति किम्? "शुक्र एषोऽन्तोऽन्तं मनुष्यः" (सं. ७–२–७)। "सँस्फानो अभि रक्षतु" (सं. ३—३—८)। सँस्फान इति किम्? "गयस्फानो अग्निषु" इत्यन्यस्यां शाखायाम्। "युवयोर्यो अस्ति" (सं. ३–५–४)। युवयोर्य इति किम्? "योऽप्सु भस्म प्रवेशयति" (सं. ५—२—२)। "नाकस्य पृष्ठे अधिरोचने दिवः" (सं. ३–५–५)। "यज्ञपतिर्वो अत्र तँ स्म" (सं. ५–७–७)। पतिर्व इति किम्? "न वोऽभागानि हव्यम्" (सं. ५–१–१)। "गो अर्धमेव सोमं करोति" (सं. ६–१–१०)। "अगो अर्धं सोमङ्कुर्यात्" (सं. ६–१–१०)। अस्यापि गो इत्यनेन ग्रहणं भवति। कस्मात्? "अप्यकारादि" (१–५२) वचनात्। "उच्छुष्मो अग्ने यजमानाय" (सं. १—६—२)। "आपो देवीरग्रे पुवो अग्ने गुवः" (सं. १—१—५)। "समिद्धो अञ्जन् कृदरम्" (सं. ५—१—११)। "अस्तभ्नाद्यामृषभो अन्तरिक्षम्" (सं. १–२–८)।

"प्रियं पाथो अपोह्यस्मत्" (सं. ३—३—३)। "उग्रं वचो अपावधीम्" (सं. १—२—११)। "वर्षिष्ठे अधि नाके" (सं. १—१—८)। "जुषाणो अप्तु राज्यस्य" (सं. १—३—४)। "यो रुद्रो अग्नौ" (सं. ५—५—९)। यो रुद्र इति किम्? "यदुप तृन्द्याद्रुद्रोऽस्य" (सं. ६—३—९)। "वृष्णो अश्वस्य सन्दानम्" (सं. २—४—७)॥

## अरतिमस्य यज्ञस्यातिद्रुतोऽतियन्त्यनृणोऽविष्यन्ननमीवोऽन्नेष्वर्चिरजीतानज्यानिमन्हिया अम्बाल्यर्वन्तमस्त्वकृणोदंगिरोऽप्सु यो अस्कभायदच्युतोऽश्वसनिरस्थभिरशिश्रेदंगेऽध्नि[1] ॥ १७ ॥

अरतिम्, अस्य यज्ञस्य, अतिद्रुतः, अतियन्ति, अनृणः, अविष्यन्, अनमीवः, अन्नेषु, अर्चिः, अजीतान्, अज्यानिम्, अन्हियाः, अम्बालि, अर्वन्तम्, अस्तु, अकृणोत्, अङ्गिरः, अप्सुयः, अस्कभायत्, अच्युतः, अश्वसनिः, अस्थभिः, अशिश्रेत्, अङ्गे, अध्नि इत्येतेषु ग्रहणेषु अकार एकारपूर्व ओकारपूर्वो वा न खलु लोपमापद्यते। यथा—"मूर्द्धानं दिवो अरतिम्" (सं. १—४—१३)। "यन्मे अग्ने अस्य यज्ञस्य" (सं. १—६—२)। अस्य यज्ञस्येति किम्? "कोऽस्येश्वरो यज्ञे" (सं. २—६—७)। "प्रत्यङ्ङ्खसोमो अतिद्रुतः" (सं. १—८—२१)। "पश्यन्तो अतियन्ति" (सं. ३—२—२)। अतिद्रुतोऽतियन्तीति किम्? "नैनँ सोमोऽति पवते" (सं. ६—५—११)। "एतत्तदग्ने अनृणो भवामि" (सं. ३—३—८)। "न यवसे अविष्यन्" (सं. ४—४—३)। "स्वा वेशो अनमीवो भवा नः" (सं. ३—४—१०)। "ये अन्नेषु विविध्यन्ति" (सं. ४—५—११)। "जातवेदो यो अर्चिः" (सं. ५—७—८)।

---

1. "ध्निय" भू०। मु०।

"शरदो अजीतानिन्द्रः" (सं. ५—७—२) । "तेषां यो अज्यानिमजीतिम्" (सं. ५—७—२) । "तिरो अह्निया मा सुहुताः" (सं. ७--३--१३) । "अम्बे अम्बाल्यम्बिके" (सं. ७—४—१९) । "यो अर्वन्तं जिघाँसति" (सं. ७—४—१५) । "अस्त्वथेमवस्य" (सं. १—२—३) । "अग्ने अङ्गिरः" (सं. १—२—१२) । "इत इन्द्रो अकृणोद्वीर्याणि" (सं. १—१—१२) । "यो अप्सु य ओषधीषु" (सं. ५—५—९) । अप्सुय इति किम् ? "योऽप्सु भस्म प्रवेशयति" (सं. ५—२—२) । "यो अस्कभायदुत्तरम्" (सं. १—२—१३) । "मदाय रसो अच्युतः" (सं. १—२—६) । "यो भक्षो अश्वसनिः" (सं. ३—२—५) । अश्वसनिरिति किम् ? "सोऽश्वस्यावान्तरशफोऽभवत्" (सं. ५—२—६) । "ग्रहणस्य च" इति वचनान् अत्रापि प्राप्नोति । "इन्द्रो दधीचो अस्थभिः" (सं. ५—६—६) । अस्थभिरिति किम् ? "शमस्थभ्यो मज्जभ्यः मज्जभ्योऽस्थभ्यः" (सं. ५—२—१२) । "स्वान्तनुवं वरुणो अशिश्रेत्" (सं. १—८—१०) । "प्राणो अङ्गे अङ्गे नि देध्यत्" (सं. १—३—१०) । "एतानि ते अघ्निये नामानि" (सं. ७—१—६) । ध्नीत्यपदग्रहणमनेकपदार्थग्रहणार्थम् । "यदापो अघ्निया वरुणेति" (सं. १—३—११) । "पयो अघ्नियासु" (सं. १—२—८) । इति ॥

अध्वर स्वरपरे ॥ १८ ॥

अध्वर इत्येतस्मिन् ग्रहणे स्वरपर एकारपूर्व ओकारपूर्वो वा अकारो न लोपी भवति । यथा—"सत्यधर्माणो अध्वरे" (सं. १—२—१) । "हविष्मान् देवो अध्वरः" (सं. १—३—१२) । "उप प्रयन्तो अध्वरमित्याह" (सं. १—५—७) । अत्र "यथोक्तं पुनरुक्तं त्रिपदप्रभृति"

(१—६२) इति वचनं न भवति; अस्यासङ्ख्यानविषयत्वात्, "नानापदवदिङ्ग्यमसङ्ख्याने" (१—४८) इति सङ्ख्याने प्रतिषेधाच्च । स्वरपर इति किम्? "शुग्वा अग्निः सोऽध्वर्युम्" (सं. ५—६—२)। "अन्धोऽध्वर्युः स्यात्" (सं. ५—१—३) ॥

सपूर्वस्यार्धसदृशमेकेषाम् ॥ १९ ॥

स खल्वकारोऽलुप्तः पूर्वस्य एकारस्य वा ओकारस्य वापि अर्धकाल[1]-सदृशं भवति एकेषामाचार्याणाम् । यथा—"मा ते अस्यां सहसावन्" (सं. १—६—१२) । "समिद्धो अञ्जन्" (सं. ५—१—११)। "क्रूरः" (सं. ६—१—७) इति ॥

इति छन्दोभाषायां प्रातिशाख्यव्याख्यायां

एकादशोऽध्यायः ॥

---

[1]. अर्धकालसदृशं अर्धमात्रसदृशं कालं भजत इत्यर्थः। अध्यर्धमात्रो भवतीति तात्पर्यम्।

अथ द्वादशोऽध्यायः ॥

## अथ लोपः ॥ १ ॥

अथेत्यधिकारः । लोप[1] इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

## असि ॥ २ ॥

असि इत्येतस्मिन्नेकारपूर्व ओकारपूर्व अकारो लोपी भवति । यथा—"सुपर्णोऽसि गरुत्मान्" (सं. ४—१—१०) । "प्रथोऽसि पृथिव्यासि" (सं. ४—२—९) । "धातारातिः" (११-३) रित्येवमादीनां लोपे प्राप्ते यलोपो विधीयते ॥

## न गर्भः सन्नद्धो यमो भद्रः पूर्वः ॥ ३ ॥

गर्भः, सन्नद्धः, यमः, भद्रः, इत्येवंपूर्वः असीत्येतस्मिन् अकारो न लुप्यते । यथा—"गर्भो अस्योषधीनाम्" (सं. ४—२—३) । "सन्नद्धो असि वीडयस्व" (सं. ४—६—६) । "असि यमो अस्यादित्यो अर्वन्" (सं. ४—६—७) । "त्वं भद्रो असि क्रतुः" (सं. ४—३—१३) ॥

## यवनह[3]परः स्वरपरेषु ॥ ४ ॥

यकार–वकार–नकार–हकारपरेषु स्वरपरेषु अकारो लोपमापद्यते ।

---

1. अकारस्येति शेषः । इदं च लोपविधानम् "धातारातिः०" (११-३) इत्यादिशास्त्रस्यापवादभूतम् ।

2. "ह्रस्व" भू० ।

यथा—"हिरण्यशृङ्गोऽयो अस्य" (सं. ४—६—७)। "वनस्पतेऽवसृजा रराणः" (सं. ४—१—८)। "सविता वरेण्योऽनुप्रयाणम्" (सं. ४—१—१०)। "जम्भयन्तोऽहिं वृकं रक्षाँसि" (सं. १-७-८)। स्वरपरेष्विति किम्? "शुक्रं ते अन्यत्" (सं. ४—१—११)॥

जकारग्नपर उदात्तः॥ ५॥

जकारपरः ग्नपरश्चोदात्तः अकारः लोपमापद्यते। यथा—"अभि वाम-मोजोऽजायथाः" (सं. १—६—१२)। "शुचिः पावक वन्द्योऽग्ने बृहत्" (सं. १-३-१४)। उदात्त इति किम्? "प्रजापतिर्निधिपतिर्नो अग्निः" (सं. १-४-४४)। "पृष्टो दिवि पृष्टो अग्निः" (सं. १—५—११)॥

मोवचोदधानस्स्थेपूर्वश्च॥ ६॥

अनुदात्तार्थोऽयमारम्भः। ग्नपर इति चशब्दो ज्ञापयति। मः, वचः, दधानः, स्थे, इत्येवंपूर्वः ग्नपरः[1] अकारो लोपमापद्यते। यथा—"अङ्गिरस्व-दच्छेमोऽग्निं पुरीष्यम्" (सं. ४—१—२)। मो इत्यपदग्रहणं[2] संक्षेपार्थम्। "पूर्व्यं वचोऽग्नये भरता बृहत्" (सं. ३—२—११)। "दधानोऽग्निर्होता" (सं. ४-१-३)। "पृथिव्यास्सधस्थेऽग्निं पुरीष्यम्" (सं. ४—१—३)। अन्वादेशः किमर्थः? "सधस्थे अध्युत्तरस्मिन्" (सं. ४—६—५)॥

अभ्यावर्त्तिन्नपूपमपिदधाम्यद्यान्वादितिश्शर्मोग्ने[3]र्जि-

---

1. ग्नपर इति चकारो ज्ञापयति। ग्नपरस्यैव हि अनुदात्तार्थमस्यारम्भः सूत्रस्य।

2. पदैकदेशग्रहणमित्यर्थः।

3. "ग्नेर्जुह्वा" भू०।

ह्वामग्नयःप[1]प्रयोऽस्माकमस्मेधत्ताश्माश्वाश्रुतिर[2]श्यामामाऽर्य-मन्नस्मत्पाशानास्मिन्यज्ञेऽस्ताऽव्यथमानाऽभिद्रोहमधाय्यदो-ऽथोअदुग्धाआरिष्टाअरथाअर्च[3]न्त्यन्तरस्या[4]मत्रस्थान्नायाङ्गि-रस्वद्[5]करम् ॥ ७ ॥

अभ्यावर्तिन्, अपूपम्, अपिदधामि, अद्यानु, अदितिश्शर्म, अग्नेर्जिह्वाम्, अग्नयःपप्रयः, अस्माकम्, अस्मेधत्त, अश्मा, अश्वाश्रुतिः, अश्याम, अमा, अर्यमन्, अस्मत्पाशान्, अस्मिन्यज्ञे, अस्ता, अव्यथमाना, अभिद्रोहम्, अधायि, अदः, अथो, अदुग्धाः, अरिष्टाः, अरथाः, [6]अर्चन्ति, अन्तरस्याम्, अत्रस्थ, अन्नाय, अङ्गिरस्वत्, अकरम्, इत्येतेषु ग्रहणेषु एकारपूर्व ओकारपूर्वो वा अकारो लोपमापद्यते । यथा—"अग्नेऽभ्यावर्तिन्नभि नः" (सं. ४—२—१) । अभ्यावर्तिन्निति किम् ? "कामेन कृतो अभ्यानट्" (सं. १—१—१४) । "भद्रशोचेऽपूपं देव" (सं. ४—२—२) । "अग्नेऽपिदधामि" (सं. ४—१—१०) । अपिदधामीति किम् ? "ग्रीवायां बद्धो अपि कक्षे" (सं. १—७—८) । "अनु नोऽद्यानुमतिः" (सं. ३—३—११) । अद्यान्विति किम् ? "प्र तत्ते अद्य शिपिविष्ट" (सं. २—२—१२) । "सोमो अधि ब्रवीतु नोऽदितिः शर्म्म यच्छतु" (सं. ४—६—६) । अदितिः शर्मेति किम् ? "यथा नो अदितिः करत्" (सं. ३—४—११) । "अध्वरं नोऽग्नेर्जिह्वाम्" (सं. ४—१—८) । अग्नेर्जिह्वामिति किम् ? "व्रता ददन्ते अग्नेः" (सं. ४—१—८) । "ते नोऽग्नयः पप्रयः

---

1. "पःप्र" आ० ।
2. "रश्रामा" आ० । "रस्यामा" भू० ।
3. "चेयन्त्य" आ० ।
4. "स्यामत्प्रस्थान्ना" भू० ।
5. "दकारम्" आ० ।
6. "चेयन्ति" आ० ।

पारयन्तु" (सं. १—७—७) । अग्नयः पप्रयः इति किम् ? "पुरीष्यासो अग्नयः प्रावणेभिः" (सं. ४–२–४) । "नरोऽस्माकमिन्द्र रथिनो जयन्तु" (सं. ४—६—६) । "विश्वेऽस्मे धत्त वसवः" (सं. १—४—४४) । अस्मे धत्तेति किम् ? "द्रविणं वाजो अस्मे" (सं. ४—७—१२) । "परि वृङ्धि नोऽश्मा भवतु नः" (सं. ४—६—६) । अश्वाश्रुतिः अश्वा इति यत्र यत्र श्रुतिरस्ति तत्र तत्राकारलोपः । "वृषपाणयोऽश्वा रथेभिः" (सं. ४—६—६) । श्रुतिरिति किम् ? "प्रचेतसोऽश्वान् समत्सु" (सं. ४–६–६) । "भरन्तोऽश्वायेव तिष्ठते घासमस्मै" (सं. ४–१–१०) । अश्वा इति दीर्घोच्चारणम्[1] । "क्षत्रन्नो अश्वो वनतां हविष्मान्" (सं. ४—६—९) । "वाजमभि वा जयन्तोऽश्याम" (सं. १–३–१४) । "पुनस्तेऽमैषां चित्तम्" (सं. ४—७—१४) । "ये तेऽर्यमन् बहवो देवयानाः" (सं. २–३–१४) । "तेऽस्मत्पाशान् प्र मुञ्चन्तु" (सं. ४–३–१३) । अस्मत्पाशानिति किम् ? "अन्यं ते अस्मत्तपन्तु" (सं. ४–६–१) । "पिता तेऽस्मिन्यज्ञे बर्हिषि" (सं. २–६–१२) । अस्मिन् यज्ञ इति किम् ? "अस्मिन् जवमादधुः" (सं. १—७—७) । "दूणानोऽस्ताऽसि" (सं. १—२—१४) । "मा सुपर्णोऽव्यथमाना पृथिवीम्" (सं. ४—२—९) । "जनेऽभि द्रोहं मनुष्याः" (सं. ३—४—११) । अभिद्रोहमिति किम् ? "बृहस्पते अभि शस्तेरमुञ्चः" (सं. ४—१—७) । "सुमन्मेऽधायि मन्म देवानाम्" (सं. ४–६–८) । "येऽदो रोचने दिवः" (सं. ४–२–८) । "मह्यमग्नेऽथो सीद" (सं. ४–१–९) । "अभि त्वा शूर नोनुमोऽदुग्धाः" (सं. २–४–१४) । "वि निषन्त पूर्वेऽरिष्टाः स्याम" (सं. ४–७–१४) । "अनश्वासो ये पवयोऽरथाः" (सं. १–६–१२) । "गायत्रिणोऽर्चन्त्यर्कम्" (सं. १—६—१२) । "अभि शू शुचोऽन्तरस्याम्"

---

1. "दीर्घग्रहणेन किम् ? 'चषालं ये अश्वयूपाय तक्षति' (सं. ४–६–८) ।" त्रि० ।

(सं. ४—१—९)। अन्तरस्यामिति किम्? "क्षामा रुक्मो अन्तर्विभाति" (सं. ४—१—१०)। "येऽत्र स्थ पुराणाः ये च नूतनाः" (सं. ४–२–४)। अत्रस्थेति किम्? "त्वष्टा नो अत्र वरिवः कृणोतु" (सं. १—४—४४)। "सं मया रायस्पोषोऽन्नाय त्वा" (सं. १—७—९)। "पृथिव्यास्सधस्थेऽङ्गिरस्वत्" (सं. ४—१—६)। "सत्वा नोऽहं तेभ्योऽकरं नमः" (सं. ४—५—१)॥

गाह्मानोजायमानोहेतयोमन्यमानोवनस्पतिभ्यःपतेस्त्रिधस्तपसस्स्वधावो[1]भामितोऽग्नयआयोऽध्वर्योक्रतोपूर्वः ॥

गाह्मानः, जायमानः, हेतयः, मन्यमानः, वनस्पतिभ्यः, पते, स्त्रिधः, तपसः, स्वधावः, भामितः, अग्नयः, आयो, अध्वर्यो, क्रतो। गाह्मान इत्येवमादिपूर्वोऽकारः सँहितायामेकप्राणभावे लोपमापद्यते। यथा—"सहसा गाह्मानोऽदायः" (सं. ४–६–४)। "जायमानोऽह्नां केतुः" (सं.२–४–१४)। "यास्ते सहस्रँ हेतयोऽन्यम्" (सं. ४–५–१०)। "कीरिणा मन्यमानोऽमर्त्यम्" (सं. १–४–४६)। "वनस्पतिभ्योऽधि संभृताम्" (सं. ४–६–१)। वनस्पतिभ्य इति किम्? "नमः पितृभ्यो अभि" (सं. ३—२—८)। "अन्नपतेऽन्नस्य नो देहि" (सं. ४—२—३)। "अति स्त्रिधोऽत्याचित्तिम्" (सं.४–१–७)। "अग्निरग्नेस्तपसोऽधि जातः" (सं. ४–२–१०)। "देव स्वधावोऽमृतस्य" (सं. ३—१—११)। स्वधाव इति किम्? "अन्या वो अन्यामवतु" (सं. ४—२—६)। "मन्युमिन्द्र भामितोऽमित्रस्य" (सं. १—६—१२)। "यानग्नयोऽन्वतप्यन्त धिष्णियाः" (सं. ३—२—८)। उकारस्य वकारविक्रियायां व्यञ्जनपरो नकारो भवति। [2]तदस्य लोपः प्राप्नोति। स प्रतिषिध्यते। "अग्नेऽदब्धायोऽशीततनो" (सं. १—१—१३)। "अध्वर्योऽवेरपाः३" (सं. ६–४–३)।

---

1. "वोतामि" भू०।
2. तस्मादकारस्य लोप इत्यर्थः।

"शतक्रतोऽनु ते दायि" (सं. २—५—१२)। अदब्धायो अध्वर्यो क्रतो इति त्रिष्वेतेषु ग्रहणेषु लोपविधानादतोऽन्येषु ग्रहणेषु अलोपं प्रापयति। शतक्रतोऽनु ते दायीति च "यवनहा" (१२—४) दिनैव लोपे सिद्धे अस्य ग्रहणं अन्यत्रालोपं प्रापयति ॥

## तस्मिन्ननुदात्ते पूर्व उदात्तः स्वरितम् ॥ ९ ॥

तस्मिन्नकारे अनुदात्ते लुप्ते पूर्व एकार ओकारो वा उदात्तः स्वरितमापद्यते। यथा—"तेऽब्रुवन्" (सं. २—५—१)। "सोऽब्रवीत्" (सं. २—१—२) ॥

## उदात्ते चानुदात्त उदात्तम् ॥ १० ॥

तस्मिन्नेवाकारे उदात्ते लुप्ते पूर्वस्वरोऽनुदात्त एकार ओकारो वा उदात्तमापद्यते। यथा—"स नः पावक दीदिवोऽग्ने" (सं. १–३–१४)। "अव रुन्धतेऽसत्रं वा एतत्" (सं. ७—३—८) ॥

## स्वरितश्च सर्वत्र ॥ ११ ॥

उदात्त इति चशब्दोऽन्वादिशति। तस्मिन्नेवाकारे उदात्ते लुप्ते पूर्वस्वरः स्वरितश्च एकार ओकारो वा उदात्तमापद्यते सर्वत्र। यथा—"भेषजं गवेऽश्वाय पुरुषाय" (सं. १—८—६)। "ओजोऽजायथा वृषभ" (सं. १—६—१२)। सर्वत्रेति वचनात् नित्यस्वरितेऽपि तथैव विधानं स्यात्। यथा—"अथोक्थ्योऽथातिरात्रः" (सं. ७—१—५) ॥

इति माहिषेयछन्दोभाषायां प्रातिशाख्यव्याख्यायां
द्वादशोऽध्यायः।

**प्रथमः प्रश्नः समाप्तः ॥**

---

# अथ द्वितीयप्रश्नः ॥

## प्रथमोऽध्यायः ॥

### अथ मकारलोपः ॥ १ ॥

अथेत्यधिकारः । मकारलोप इत्येतदधिकृतं[1] वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

### रेफोष्मपरः ॥ २ ॥

रेफपरः ऊष्मपरश्च मकारो लोपमापद्यते । यथा—"प्रत्युष्टँ रक्षः" (सं. १—१—२) । "सँशितं मे ब्रह्म" (सं. ४—१—१०) । "तँ षडह्नान्यबिभरुः" (सं. ५-५-२) । "सँसमिद्युवसे" (सं. २-६-११) । "त्वँ ह यद्यविष्ठ्य सहसः" (सं. २—६—११) । रेफोष्मपर इति किम् ? "इदं वामास्ये हविः" (सं. ३—३— ११) ॥

### [2]यवकारपरश्चैकेषामाचार्याणाम् ॥ ३ ॥

यकारपरः वकारपरश्च मकारो लोपमापद्यते एकेषामाचार्याणां मतेन[3] । यथा—"एतं युवानं परि वः" (सं. ३—३—९) । "संवत्सरीणा

---

1. अनेन पदान्तस्य मकारस्य लोपोऽधिक्रियते ।

2. "यकार" आ० ।

3. येषां मते मकारस्य यकारपरस्य वकारपरस्य वा परसवर्णादेशः पञ्चमाध्याये प्रतिषिद्धस्तेषां मतेनेत्यर्थः ।

मरुतः स्वर्काः" (सं. ४—३—१३)। यवकारपर इति किम्? "यं कामं कामयते" (सं. ७—१—१)॥

न सँसामिति रापरः॥ ४॥

न खलु सम्, साम् इत्येतयोः रापरो मकारो लोपमापद्यते। यथा— "सम्राडसि कृशानुः" (सं. १–३–३)। "अन्नँ साम्राज्यानामधिपतिम्" (सं. ३—४—५)। संसामिति किम्? "शँ राजन्नोषधीभ्यः" (सं. ३—२—३)। रापर इति किम्? "सँ रराणो यजमानाय" (सं. १—४—४४)॥

अथ वर्णानाम्॥ ५॥

अथेत्यधिकारः। वर्णानां संहितेत्येतदधिकृतं वेदितव्यम्। इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः॥

ऋकारॠकाररषपूर्वो नकारो णकारँ समानपदे॥ ६॥

ऋकार-ॠकार-रेफ-षकारपूर्वः नकारो णकारमापद्यते समानपदे। यथा—"त्रिभिर् ऋणवान् जायते ब्रह्मचर्येण" (सं. ६—३—१०)। "त्वँ होतॄणामस्या यजिष्ठः" (सं. ४—३—१३)। "एष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्य" (सं. ६—१—३)। "कृष्णोऽस्याखरेष्ठः" (सं. १—१—११)। समानपद इति किम्? "तेभिर्नो अद्य पथिभिः" (सं. ७—५—२४)॥

व्यवेतोऽपि॥ ७॥

ऋकार-ॠकार-रेफ-षकारपूर्वः अन्यव्यवेतोऽपि नकारो णकारमापद्यते। यथा—"स आत्मन्ना रमणं नाविन्दत्" (सं. ६—५—११)। समानपद इत्येव। "बृहस्पतिरनया त्वा" (सं. २—४—४)॥

[1]हिरण्मय-पाणि-गण-पुण्य-कण्व-काण-गाण-बाण-वेणु[2]-गुण-मणिप्रवादेषु पूर्वः ॥ ८ ॥

हिरण्मयादिग्रहणेषु पूर्वः[3] प्रकृत्यैव णकारो वेदितव्यः। यथा—"हिरण्मयं दाम दक्षिणा" (सं. २–४–१३)। "०स्पर्शपरः०" (१३–१५) प्रतिषिध्यत इति [4]प्रापणार्थम्। "हिरण्यपाणिमूतये" (सं. १–४–२५)। "गणानां त्वा गणपतिँ हवामहे" (सं. २—३—१४)। "पुण्यो भवति वसन्तम्" (सं. १—६—११)। "कण्वा अभि प्र गायत" (सं. ४—३—१३)। "तस्यै काणो या दतः" (सं. २—५—१)। "गाणपत्यान्मयोभूरेहि" (सं. ४—१—२)। "विशल्यो बाणवाँ उत" (सं. ४—५—१)। "वेणुना वि मिमीते" (सं. ५—२—५)। "यथा गुणे गुणमन्वस्यति" (सं. ७—२—४)। "मणिना रूपाणीन्द्रेण" (सं. ७—३—१४)। प्रवादेष्विति किम्? "वैणवी भवंति वीर्यस्यावरुध्यै" (सं. ५—१—१)। हिरण्मयपाण्यादिशब्दानां [5]प्रकर्षेण वादः प्रवादकश्च प्रकर्षः। यथायुक्तलिङ्गविभक्तिभेदसमासतद्धितानि अभिव्यञ्जयति। पूर्व इति किम्? "गणेन गणमनुद्रुत्य जुहोति" (सं. ५—४—७)॥

पणिपर्णिंवीयमाण[6]ऊण्योः ॥ ९ ॥

---

1. "हिरण्मयम्" इति प्रत्येकं सूत्रं व्याख्यातम्। त्रि०।
2. "णुमणिगुणप्र" भू०।
3. पूर्वः प्रथमो णकार इत्यर्थः।
4. "०स्पर्शपर०" (१३—१५) इति वक्ष्यमाणप्रतिषेधस्य प्रतिप्रसवार्थमिदं सूत्रमित्यर्थः।
5. प्रकर्षेण वादः प्रवादः, लिङ्गविभक्तिभेदसमासतद्धितादिभिर्निर्देश इत्यर्थः।
6. "ऊत्योः" आ०। पणि, पणिम्, वीयमाणः, ऊण्योः इति छेदः।

इत्येतेषु ग्रहणेषु प्रकृत्यैव णकारो वेदितव्यः। यथा—"अग्ने देव पणिभिर्वीयमाणः" (सं. १—१—१३)। "पर्णि गोषु स्तरामहे" (सं. २—६—११)। "देव पणिभिर्वीयमाणः" (सं. १—१—१३)। "सवितारमूण्योः कविक्रतुम्" (सं. १—२—६)॥

टवर्गपरः॥ १०॥

टवर्गपरो णकारः प्रकृत्यैव वेदितव्यः। यथा—"नीलग्रीवाय च शितिकण्ठाय च" (सं. ४—५—५)। "काण्डात् काण्डात् प्ररोहन्ती" (सं. ४—२—९)॥

चङ्कुणफणत्स्थूणौहिणुयाद्धिणोति कौणेयोऽणिष्ठा उल्बणमुगणाश्रुतिश्चुपुणीका वाणिजायाणवश्चाट्णारस्थाणुन्तूणवे वीणायामश्लोणया पणेत वाणीः कल्याणी कुणपं वाणःशत शोणाश्रुति[1]र्महानामिका मेणी॥ ११॥

चङ्कुण, फणत्, स्थूणौ, हिणुयात्, हिणोति, कौणेयः, अणिष्ठाः, उल्बणम्, उगणाश्रुतिः, चुपुणीका, वाणिजाय, अणवश्च, आट्णारः; स्थाणुम्, तूणवे, वीणायाम्, अश्लोणया, पणेत, वाणीः, कल्याणी, कुणपम्, वाणश्शत, शोणाश्रुतिः, महानामिका, मेणी, इत्येतेषु ग्रहणेषु प्रकृत्यैव णकारो वेदितव्यः। यथा—"अवभृथ नि चङ्कुण निचेरुरसि" (सं. १—४—४५)। "पथामङ्क्षँस्यन्वापर्नाफणत्" (सं. १-७-८)। "अयस्स्थूणावुदितौ सूर्यस्य" (सं. १—८—१२)। "तां भ्रातृव्याय प्र हिणुयात्" (सं. २—२—६)। "निर्ऋतिमेवास्मै प्र हिणोति" (सं. २—२—६)। "रजनो वै कौणेयः" (सं. २—३—८)। "येऽणिष्ठास्तान् विष्णवे" (सं. २—५—५)। "यज्ञ उल्बणं क्रियते",

---

1. "तिर्द्धाणिका मे" मु०। भू०।

"अनुल्बणं वयत" (सं. ३—४—३) । अत्रापि णकारः प्रकृत्यैव । कस्मात् ? "अप्यकारादि" (१-५२) वचनात् । "आव्याधिनीरुगणा उत" (सं. ४—१—१०) । श्रुतिग्रहणं अपदाधिगमार्थम् । "नम उगणाभ्यस्तृँहतीभ्यः" (सं. ४—५—४) । "चुपुणीका नामासि" (सं. ४-४-५) । "वाणिजाय कक्षाणाम्" (सं. ४—५—२) । "प्रियङ्गवश्च मेऽणवश्च मे" (सं. ४-७-४) । अणवश्च मेति किम् ? "अनवस्ते रथम्" (सं. १--६-१२) । "एतं वै पर आट्णारः" (सं. ५—६—५) । "यः स्थाणुँ हन्ति" (सं. ७—३—१) । "या तूणवे" (सं. ६-१-४) । "या वीणायाम्" (सं. ६—१—४) । "अकाणयाऽश्लोणया" (सं. ६—१—६) । "पणेतागो अर्घम्" (सं. ६—?—१०) । "इन्द्रं वाणीरनूषत" (सं. १—६—१२) । " कल्याणी रूपसमृद्धा" (सं. ७-१-६) । "पुरुषकुणपमश्वकुणपम्" (सं. ७—२— १०) । "वाणश्शततन्तुर्भवति" (सं. ७—५—९) । वाणश्शततन्तुरिति किम् ? "ऋतावानश्चयमानाः" (सं. २—१ · ११) । "शोणा धृष्णू नृवाहसा" (सं. ७—४—२०) । श्रुतिरित्यपदाधिगमार्थम् । "शोणाय स्वाहा" (सं. ७—३—१८) । महानामिका इति अर्थग्रहणमिति तद्वाचिनां धाणिकादीनां ग्रहणम् । "निजल्गुलीति धाणिका" (सं. ७—४—१९) । "वनस्पतीनामेणी" (सं. ५—५—१५) । मेणीति किम् ? "उभयत एनी स्यात्" (सं. ७—१—६) ॥

## अवग्रहो वृषण्शीर्षण्ब्रह्मण्णक्षण्चर्म्मण्चर्षण् ॥

वृषण् आदिष्ववग्रहेषु प्रकृत्यैव णकारो वेदितव्यः । यथा— "वृषण्वतीः प्रतिपदं कुर्यात्" (सं. ७-५-५) । "शीर्षण्वान् मेघ्यो भवति" (सं. ७—५—२५) । "ब्रह्मण्वन्तो देवा आसन्" (सं. ६-४-१०) । "अक्षण्वते स्वाहा" (सं. ७—५—१२) । "चर्म्मण्वते स्वाहा"

(सं. ७—५—१२) । अवग्रह इति किम् ? "तस्मात् सप्तशीर्षन्" (सं. ५—१—७) । "ब्रह्मन् विशं वि नाशयेयम्" (सं. २-३-३) । "अक्षन्नमीमदन्त ह्यव प्रिया अधूषत" (सं. १—८—५) । "पशूनां चर्मन् मिमीते" (सं. ६—१—९) । ननु वृषण् इत्येवमादीनां "ऋकाररेफषपूर्वः०" (१३—६) इत्यादिनैव सिद्धम् । किमर्थं पुनरारम्भः ? नैवम्, तस्य प्रतिषिद्धत्वात् "०अन्त०" (१३—१५) इत्यनेन । पुनर्ग्रहणार्थमिदं वचनम्[1] ॥

ऋण्णषण्णष्णम्णरा[2]वृण्ण च ॥ १३ ॥

ऋण्ण, षण्ण, ष्ण, म्ण, रावृण्ण इत्येतेषु ग्रहणेषु प्रकृत्यैव णकारो वेदितव्यः । यथा—"असन्तृण्णे हि हनू" (सं. ६-२-११) । "मृधा वा एषोऽभिषण्णः" (सं. २-४-२) । उत्तरस्य णत्वे प्राप्ते पूर्वस्य च "०स्पर्शपर०" (१३—१५) इति प्रतिषेधे प्राप्ते एतयोरिह ग्रहणम् । "पूष्णो रँह्या अपाम्" (सं. १—३—१०) । "अर्यम्णे चरुं निर्वपेत्" (सं. २—३—४) । "०अलोपात्०" (१३—१५) इति प्रतिषेधे प्राप्ते एतेषामिह ग्रहणम् । "दधिक्रावृण्णो अकारिषम्" (सं. १-५-११) । "ग्रावृण्णो वायव्यानि" (सं. ६-३-२) । ऋण्णषण्णष्णम्ण चेति किम् ? "अधिषवणमसि" (स. १—१—५) ॥

इति प्राकृताः[3] ॥ १४ ॥

---

1. अत्र चर्षणग् इतीदं नोदाहृतम् । तत्र कारणं अस्यां शाखायामुदाहरणं नास्तीति । तस्माच्छाखान्तरे विज्ञेयमुदाहरणम् । केचित्तु "मित्रस्य चर्षणीधृतः" (सं. ३—४—११) इत्युदाहरन्ति ।

2. "राविण्ण" आ० । इदमुत्तरसूत्रं चैकीकृत्यैकमेव सूत्रं दृश्यते । मु० । भू० । ऋण्णषण्ण इत्यादिपदैकदेशा बहूपादानार्थमुक्ताः ।

3. प्राकृतशब्दोऽयं पाण्यादिष्वेव चर्षणग्पर्यन्तेषु मुख्यः ।

हिरण्मयपाणीत्येवमादिषु ग्रहणेषु "ऋण्णषण्णष्णम्ण च" इति ये व्याख्याताः ते णकारा वेदितव्याः प्राकृताः । न विकारेणाकाराः प्राकृताः ॥

न सुषुम्नोऽग्नियुष्मानीतोऽन्तोऽलोपात् स्पर्शपरो व्यवा[1]यिषु शसचटतवर्गीयेषु ॥ १५ ॥

सुषुम्नः, अग्नि, युष्मानीतः, एतेषु ग्रहणेषु नकारो णकारं नापद्यते । यथा –"सुषुम्नः सूर्यरश्मिश्चन्द्रमाः" (सं. ३--४--७)। "इन्द्राग्निभ्यां त्वा" (सं. ४–४–५) । "युष्मानीतो अभयं ज्योतिरश्याम्" (सं. २–१–११) । अन्तः पदान्तो नकारो णकारं नापद्यते । यथा–"प्र मृणीहि शत्रून्" (सं. १–२–१४) । अलोपात् "अल्लोपोऽनः" (पा०सू०. ६–४–१३४) । इत्यकारलोप उच्यते । अकारलोपात्परो नकारो णकारं नापद्यते । यथा— "वृत्रघ्न इन्द्राय त्वा" (सं. १—४—१) । स्पर्शपरश्च नकारो णकारं नापद्यते । यथा—"संक्रन्दनोऽनिमिष एकवीरः" (सं. ४—६—४) । "पृषन्तस्त्रयो वार्षिकाः" (सं. ५—६—२३) । "नखनिर्भिन्नम्" (सं. १—८—९) । व्यवायिषु शसचटतवर्गीयेषु शकारसकारचवर्गटवर्गतवर्गीयेषु व्यवायिषु व्यवायभूतेषु नकारो णकारं नापद्यते । यथा "पुरोडाशेन वै देवाः" (सं. ५–५–१) । "अग्ने रसेन तेजसा" (सं. १–४–४६)। "रोचन्ते रोचना दिवि" (सं. ७—४ – २०)। "वत्सासो नः प्रक्रीडिनः पयोधाः" (सं. ४—३—१३)। "अग्निना देवेन पृतना जयेम" (सं. ३—५—३) ॥

[2]पृक्तस्वरात्परो ळो[3] डं पौष्करसादेः ॥ १६ ॥

---

1. "वोयषु" मु० । 'न सुषुम्नोऽग्निर्युष्मानीतः', 'अन्तः', 'अलोपात्', 'स्पर्शपरः', 'व्यवायिषु शसचटतवर्गीयेषु', एवं सूत्रपञ्चकरूपेण व्याख्यातम् । भू० ।
2. "वृत्तस्व" आ० ।
3. "लो डं" भू० । "लो डं", "ळो डं" इति द्विविधोऽपि पाठो दृश्यत इति द्विधा व्याख्यातम् । त्रि० ।

पृक्तस्वरात् ऋकारादित्यर्थः । पृक्तस्वरात्परो लकारो डकारमापद्यते पौष्करसादेर्मतेन । "मृडा जरित्रे रुद्रस्तवानः" (सं. ४—५—१०) । [1]पृक्तस्वरादिति किम् ? "इलान्दं भवति प्रजाभ्यः" (सं. ७—५—९) ॥

इति छन्दोभाषायां द्वितीयप्रश्ने

प्रथमोऽध्यायः ॥

———

1. "वृत्तस्व" आ० ।

अथ द्वितीयोऽध्यायः ॥

## स्वरपूर्वं व्यञ्जनं द्विवर्णं व्यञ्जनपरम् ॥ १ ॥

स्वरपूर्वं व्यञ्जनं द्विवर्णमापद्यते व्यञ्जनपरम् । यथा—"उरुप्रथस्व" (सं. १—१—८) । स्वरपूर्वमिति किम् ? "यत् प्राच उत्सृजेत्" (सं. ५—२—५) । "प्रथमे मासि" (सं. ७—५—३) । व्यञ्जनमिति किम् ? "प्रउगमुक्थम्" (सं. ४—४—२) । व्यञ्जनपरमिति किम् ? "उरुकृदुरु णस्कृधि" (सं. २—६—११) ॥

## लवकारपूर्वः स्पर्शश्च पौष्करसादेः ॥ २ ॥

पौष्करसादेः शाखिनः लकारपूर्वश्च वकारपूर्वश्च स्पर्शो द्वित्वमापद्यते । यथा—"अनुल्ब्बणं वयत जोगुवामपः" (सं. ३–४–२) । "दधिक्राव्ण्णो अकारिषम्" (सं. १—५—११) । स्पर्श इति किम् ? "या कल्याणी रूपसमृद्धा" (सं. ७–१–६) । "होतव्यं दीक्षितस्य" (सं. ६–१–४) ॥

## स्पर्श एवैकेषामाचार्याणाम् ॥ ३ ॥

एकेषामाचार्याणां लवकारपूर्वः स्पर्श एव द्विवर्णमापद्यते । यथा—"अल्प्पो ह्येष जातो महान्" (सं. ५–१–३) । "विभूदाव्न्ने ज्योतिष्मते" (सं. ३—५—८) ॥

## रेफात्परं च ॥ ४ ॥

रेफात्परं व्यञ्जनं च द्विवर्णमापद्यते । यथा—"अर्क्कपर्णेन जुहोति"

(सं. ५—४—३) । "सूर्य्यस्य पुरुत्रा च रश्मीन्" (सं. ४-१-२) ॥

द्वितीयचतुर्थयोस्तु व्यञ्जनोत्तरयोः पूर्वः ॥ ५ ॥

द्वितीयचतुर्थयोः स्पर्शयोः व्यञ्जनोत्तरयोः प्रथमतृतीयावागमौ भवतः ; प्रथमो द्वितीयस्य तृतीयश्चतुर्थस्य । यथा—"विक्ख्याय चक्षुषा त्वमभि तिष्ठ" (सं. ४—१—२) । "मेद्ध्या विद्युतो वाचः" (सं. ५-२-११)। [1]तुशब्दः सरूपस्यैव द्वित्वं यत् प्रकृतं तन्निवर्त्तयति । अन्ये मन्यन्ते—पूर्वस्यागमस्य द्वित्वं विनिवर्त्तयतीति । पूर्व इत्येकवचनात् प्रथमतृतीयौ प्रत्येकमपि संबध्येते ॥

रेफपूर्वयोश्च नित्यम् ॥ ६ ॥

द्विवचनोक्त्या द्वितीयचतुर्थौ परिगृह्येते । द्वितीयचतुर्थयो रेफपूर्वयोश्च नित्येन पूर्वावागमौ भवतः । "अर्त्थैतस्स्थापां पतिरसि" (सं. १—८—११) । "ऊर्द्ध्वो भव प्रतिविध्याध्यस्मत्" (सं. १—२—१४) । नित्यमिति वचनात् स्वरपरेऽपि स्यादेतद्विधानम् । "मूर्क्खा तज्जघन्या" (सं. ७—१—६) । "गो अर्ग्घमेव सोमं करोति" (सं. ६—१—१०) ॥

लकारपूर्वे च ॥ ७ ॥

चतुर्थ इति चशब्दो ज्ञापयति । लकारपूर्वे चतुर्थे नित्येन पूर्व आगमो भवति । यथा—"प्रगल्ब्भोऽस्य जायतेऽनाद्दत्य" (सं. २-५-५)॥

उपसर्गः[2]पाथएषोऽत्यातिधामपरमभूतेपूर्वेषु छखिभुजेषु च ॥ ८ ॥

---

1. "प्रथमसूत्रेण प्रसक्तं द्वित्वं निवर्त्तयति तुशब्दः" । त्रि० ।

2. "गोपा" भू० ।

उपसर्गः, पाथएषः, अति, आति, धाम, परम, भूते, इत्येतेषु पूर्वेषु छ, खि, भुज, इत्येतेषु परेषु पूर्व आगमो भवति । यथा—"वसवस्त्वाच्छृन्दन्तु गायत्रेण छन्दसा" (सं. ४—१—६) । "या च विच्छन्दाः सूचीभिः" (सं. ५—२—११) । "आच्छेत्ता ते मा रिषम्" (सं. १—१—२) । "अपूप्येति पाथः एष च्छागः" (सं. ४–६–८) । पाथ एष इति किम् ? "ऋतुभिर्वा एष छन्दोभिः स्तोमैः" (सं. ७–५–१५) । "यदतिच्छन्दा यदतिच्छन्दसमुप दधाति" (सं. ५–३–८) । "सवित्र आतिच्छन्दसाय" (सं. ७–५–१४) । "धामच्छदे पुरोडाशम्" (सं. २–४–१०) । "परमच्छदो वर आ विवेश" (सं. ४–६–२) । "यद् भूतेच्छदाँ सामानि" (सं. ७–५–९) । खिपरः—"आक्खिदते च प्रक्खिदते च" (सं. ४–५–९) । खीति किम् ? "निखातं मनुष्याणामूर्ध्वं निखातात्" (सं. ६–३–४) । "अयक्ष्मया परिब्भुज" (सं. ४—५—१) । भुजेति किम् ? "परि भूरग्निम्" (सं. ३—२—३) ॥

## अघोषादूष्मणः परः प्रथमोऽभिनिधानः स्पर्शपरात्तस्य सस्थानः ॥ ९ ॥

अघोषादूष्मणः स्पर्शपरात्तस्य स्पर्शस्य सस्थानः प्रथमोऽभिनिधानो[1] भवति । यथा—"अश्प्मन्नूर्जं पर्वते" (सं. ४—६—१) । "ग्रीष्प्मे मध्यन्दिने" (सं. २—१—२) । "अयस्प्मयं विचृता बन्धमेतम्" (सं. ४—२—५) । अघोषादिति किम् ? "शरद्यपराह्णे यावन्ति" (सं. २—१—२) । "अह्ने शुक्लं पिङ्गलम्" (ब्रा. ३—४—१७) । ऊष्मण इति किम् ? "रुक्ममुप दधाति" (सं. ५—२—७) ॥

---

1. "अभिनिधीयत इत्यभिनिधानः, आरोपणीय इत्यर्थः । वेदान्तरे तस्यारोपणीयत्वम्" । त्रि० ।

अघोषे प्लाक्षेः ॥ १० ॥

प्लाक्षेः शाखिनः अघोषादूष्मणः अघोष एव स्पर्शपरे प्रथमोऽभिनिधानो भवति। यथा—"निष्क्केवल्यमुक्थम्" (सं. ४—४—२)। "यश्च्छन्दसामृषभो विश्वरूपः" (तै. उ. प्र. १, अनु. ४)। "सुश्चन्द्र दस्म विश्पपते" (सं. ४—४—४)। अघोषपर इति किम्? "कूश्माञ्च्छकभिः" (सं. ५—७—२३)॥

उत्तमपरात्तु प्लाक्षायणस्य ॥ ११ ॥

प्लाक्षायणस्य शाखिनः अघोषादूष्मणः उत्तमपरात् प्रथमोऽभिनिधानो भवति। यथा—"अक्ष्ण्णया व्याघारयति" (सं. ५—२—७)। "अघोषे प्लाक्षेः" (१४—१०) इत्यत्र अघोषमिति प्राकृतं तुशब्दो[1] विनिवर्त्तयति॥

प्रथम ऊष्मपरो द्वितीयम् ॥ १२ ॥

प्रथमः स्पर्श ऊष्मपरः सवर्गीयं द्वितीयं आपद्यते। यथा—"प्रत्यङ्ख्सोमो अति द्रुतः" (सं. १—८—२१)। "वद्त् स्वयमभिगूर्त्ताय नमः" (सं. ३—२—८)। "अप्फ्सु वै वरुणः"(सं. २—३—१२)। "तथ् सवितुः" (सं. १—५—६)। अथ ऊष्मपर इति किम्? "वाक्त आप्यायताम्" (सं. १—३—९)। "अर्वाग्घ्येनं परैः" (सं. ६—३—३)। अत्र "प्रथमपूर्वो हकारः चतुर्थं तस्य सस्थानम्०" (५—३८) इति हकारस्य चतुर्थापत्तिः, विशेषविहितत्वात्। ततः प्रथमस्य "तृतीयँ स्वरघोषवत्परः" (८—३) इति तृतीयत्वम्॥

वाडभीकारस्यासस्थानपरः ॥ १३ ॥

---

1. "तुशब्दः प्लाक्षेः पक्षमपाक्षिपति"। त्रि०।

वाडभीकारस्य शाखिनः असस्थानोष्मपर एव प्रथमो द्वितीयं सवर्गीय-मापद्यते । यथा—"ऋक्सामे वै देवेभ्यः" (सं. ६–१–३) । "तथ्-षोडश्यभवत्" (सं. ६–६–११) । "अफ्सु व वरुणः" (सं. २–३–१२) । असस्थानपर इति किम् ? "तत्सवितुः" (सं. १—५—६) ॥

अथ न ॥ १४ ॥

अथेत्यधिकारः । द्विवर्णप्रतिषेध इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः ॥

अवसाने र-विसर्जनीय-जिह्वामूलीयो-पध्मानीयाः ॥ १५॥

अवसाने वर्त्तमानो वर्णः, रेफः, विसर्जनीयः, जिह्वामूलीयः, उपध्मानीयः, इत्येते वर्णा द्वित्वं नापद्यन्ते । यथा—"ऊर्क्[1] च मे" (सं. ४—७—४) । "ऊर्जस्वतीः" (सं. १—१—१) । "घनाघनः क्षोभणश्चर्षणीनाम्" (सं. ४–६–४) । "यः कामयेत" (सं. २–१–२) । "वनस्पतयः फलम्" (सं. २—५—६) ॥

ऊष्मा स्वरपरः ॥ १६ ॥

स्वरपर ऊष्मा न खलु द्वित्वमापद्यते । यथा—"दर्शपूर्णमासौ" (सं. २—२—५) । "मूर्धानं दधिषे सुवर्षाम्" (सं. ४–४–४) । "बर्स नह्यत्यप्रस्रंसाय" (सं. २—५—७) । "अद्भिर्हवींषि प्रौक्षीः" (सं. २—६—५) ॥

प्रथमपरश्च प्लाक्षि-प्लाक्षायणयोः ॥ १७ ॥

प्लाक्षि-प्लाक्षायणयोराचार्ययोः प्रथमपर ऊष्मा च स्वरपरश्च न खलु

---

1. अत्र "रेफात्परं च" (१४—४) इति द्वित्वप्राप्तिः । तदनेन निषिध्यते ।

द्वित्वमापद्यते । यथा—"आग्नेयमष्टाकपालम्" (सं. १—८—२) । "सुश्चन्द्र दस्म विश्पते हव्यवाट्" (सं. ४-४-४) । प्रथमपरश्चेति किम् ? "तान्देवा इष्वा च वज्रेण च" (सं. ५-७-३) ॥

ऊष्माऽघोषो हारीतस्य ॥ १८ ॥

ऊष्माग्रहणं पूर्वसूत्रान(वे ? पे)क्षणार्थम् । अत्र यद्यूष्मा इति न क्रियते तत्पूर्वसूत्रे ऊष्मा इत्येतत् स्वरपरत्वेन प्रथमपरत्वेन च सम्बध्द्म् । तस्मादिहापि तत्सम्बन्धायैवाघोषग्रहणं विशेषणं स्यात् । अतस्तन्निवृत्त्यर्थमिह ऊष्मा इति सिद्धमुक्तम् । हारीतस्य चाचार्यस्य शाखिनः अघोष ऊष्मा सर्वावस्थासु न खलु द्वित्वमापद्यते । यथा—"वैश्यो मनुष्याणाम्" (सं. ७-१-१) । "अष्टाकपालम्" (सं. १-८-२) । "वर्सं नद्यत्वश्वसंसाय" (सं. २-५-७) । अघोष इति किम् ? "महद्भ्यश्चैवैष वायवे च सह" (सं. ६-४-७) ॥

रेफपरश्च हकारः ॥ १९ ॥

चशब्दो हारीतमतस्यान्वादेशकः । रेफपरो हकारो हारीतस्य न खलु द्वित्वमापद्यते । यथा—"शुक्रं दुदुह्रे अह्रयः" (सं. १—५—५) । रेफपर इति किम् ? "जुहृह्वे ह्यग्निस्त्वा" (सं. १—१—१२) ॥

टवर्गश्च तवर्गपरः ॥ २० ॥

अत्रापि हारीतस्यैवान्वादेशः । टवर्गस्तवर्गपरो न द्विवर्णमापद्यते । यथा—"वषट् ते विष्णवास आ कृणोमि" (सं. २—२—१२) । "विड् द्रविणम्" (सं. १—८—१३) । तवर्गपर इति किम् ? "विड्ड् वै मरुतः" (सं. ६—६—५) ॥

लतवर्गौ यवकारपरौ ॥ २१ ॥

न द्विवर्णमापद्येते । यथा लकारः—"कल्याणी" (सं. ७–१–६) । "ततो बिल्व उदतिष्ठत्" (सं. २—१—८) । तवर्गः—"क्रोशातिगर्दा कन्येव तुन्ना" (सं. ३—१—११) । "इषे त्वोर्जे त्वा" (सं. १—१—१) ॥

[1]सवर्णसवर्गीयपरः ॥ २२ ॥

स्वरूपपरः सवर्गीयपरश्च[2]वर्णो न द्वित्वमापद्यते । यथा—"अत्वक्काय स्वाहा" (सं. ७—५—१२) । "अन्नपतेऽन्नस्य" (सं. ४—२—३) । "शकुनिः पिप्पका ते शरव्यायै" (सं. ५—५—१९) । "यच्छोहितम्" (सं. २—१—७) । "[3]अङ्कौ न्यङ्कावभितः" (सं. १–७–७) । "काण्डे काण्डे वै क्रियमाणे" (सं. ६—१—७) । "अयं वाम्मित्रावरुणा सुतः" (सं. १—४—५) । "तद्देवा वामभृतावृञ्जत" (सं. ५–५–३) । सवर्णसवर्गीयपर इति किम् ? "आप्यायध्वमघ्निया देवभागमूर्जस्वतीः" (सं. १—१—१) । "प्रार्पयतु श्रेष्ठतमाय कर्म्मणे" (सं. १–१–१) । "त्रीन् वरान् दद्यात्त्रयो वै" (सं. ५—२ – ८) ॥

[4]परश्च ॥ २३ ॥

एवं द्वित्वे कृते पुनःपुनः द्वित्वं नापद्यत इत्येवमर्थं सूत्रम् ॥

नानुत्तम उत्तमपरः ॥ २४ ॥

अनुत्तम उत्तमपरो न खलु न द्वित्वमापद्यते । यथा—"आत्मानमेव दीक्षया" (सं. ६—२—२) । "विद्मा ते अग्ने त्रेधा"

---

1. अस्मात्सूत्रात् प्राक् "परश्च" इति सूत्रं व्याख्यातम् । त्रि० ।
2. सवर्णत्वं नाम सारूप्यमुच्यते, न तुल्यस्थानकरणतामात्रम् । सवर्गीयः समानवर्गसम्बन्धि ।
3. सवर्गीयपराणामुदाहरणं अङ्काविस्यादि ।
4. इदं सूत्रं नास्ति । भू० ।

(सं. ४—२—२) । अनुत्तम इति किम् ? "तं मा देवा अवन्तु" (सं. ३—३—२) ॥

अथैकेषामाचार्याणाम् ॥ २५ ॥

अथेत्यधिकारः । एकेषामाचार्याणामित्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

लकारो हशवकारपरः ॥ २६ ॥

लकारः हकारपरः शकारपरः वकारपरः वा द्वित्वं नापद्यते, एकेषामाचार्याणां मतेन । यथा—"तस्मा एता मल्हा आलभेत" (सं. २–१–२) । "शतवल्शं विरोह" (सं. १–१–२) । "सहस्रवल्शाः" (सं. १–१–२) । "ततो बिल्व उदतिष्ठत्" (सं. २—१—८) । हशवकारपर इति किम् ? "कल्माषी भवति" (सं. ५—१—१) । "कल्याणी रूपसमृद्धा" (सं. ७—१—६) ॥

स्पर्शः स्पर्शपरः ॥ २७ ॥

स्पर्शः स्पर्शपरो द्वित्वं नापद्यते । यथा—"संवत्सरो वा अब्दो मासा अयावाः" (सं. ५—६—४) ॥

पदान्तश्च[1] व्यञ्जनपरः प्राकृतः ॥ २८ ॥

एकेषामाचार्याणां पदान्तश्च व्यञ्जनपरः अविकारि द्वित्वं नापद्यते । व्यञ्जनपर इति किम् ? "ऊर्गन्नमूर्जैवास्मै" (सं. ५—४—९) । प्राकृत इति किम् ? "वाग्वै देवेभ्यः" (सं. ६—१—४) "यद्वै होताध्वर्युः" (सं. ३—२—९) ॥

उदात्तात्परोऽनुदात्तः स्वरितम् ॥ २९ ॥

---

1. "माहिषेयेऽपि नकारस्यैवानुकर्षणं सिद्धवत्कृत्योक्तम्" । त्रि० ।

उदात्तात्परो योऽनुदात्तः स स्वरितमापद्यते । यथा—"प्रपा असि त्वम्" (सं. २—५—१२) ॥

व्यञ्जनान्तर्हितोऽपि ॥ ३० ॥

उदात्तात्परोऽनुदात्तो व्यञ्जनान्तर्हितोऽपि[1] स्वरितमापद्यते । यथा—"स ते जानाति सुमतिं यविष्ठ" (सं. १—२—१४) । "प्रार्पयतु श्रेष्ठतमाय" (सं. १—१—१) ॥

नोदात्तस्वरितपरः ॥ ३१ ॥

उदात्तपरो वा स्वरितपरो वा उदात्तात्परोऽनुदात्तः स्वरितं नापद्यते । यथा—"कृणुष्व पाजः प्रसितिं न पृथ्वीम्" (सं. १–२–१४) । "तस्य क्व सुवर्गो लोक इति" (सं. २—६—५) ॥

नाग्निवेश्यायनस्य ॥ ३२ ॥

न अग्निवेश्यायनस्य शाखिनो मतेन उदात्तपरो वा स्वरितपरो वा उदात्तात्परोऽनुदात्तः स्वरितं नापद्यते । "प्रति धातवे" (सं. १–४–४५) । "वोढवे जातवेदः" (सं. १—६—२) । "तस्य क्व" (सं. २–६–५) ॥

सर्वो नेत्येके ॥ ३३ ॥

एके आचार्याः सर्वत एव स्वरितं न [2] भवतीति मन्यन्ते । उदात्त उदात्तमेव अनुदात्त अनुदात्तमेव । द्वै स्वसूर्यमेव ते उदात्ते नानुदात्तेन (?) ॥

इति द्वितीयप्रश्ने द्वितीयोऽध्यायः ॥

---

1. अन्तर्हितः व्यवहितः ।

2. "न केवलमुदात्तात्परः किन्तु सर्व एव सप्तविधस्वरितो नास्तीत्येके शाखिनो मन्यन्ते । तथाहि—वाजसनेयिब्राह्मणे (शातपथे) द्वावेव स्वरावुदात्तश्चानुदात्तश्च" । त्रि० ।

## अथ तृतीयोऽध्यायः ॥

नकारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्च पूर्वस्वरोऽनुनासिकः ॥ १ ॥

नकारस्य रेफभावादूष्मभावाद्वा यकारभावाद्वा तस्मिन् यकारे[1] लुप्ते च मकारलोपाच्च पूर्वस्वरः अनुनासिकगुणो भवति । यथा रेफभावात्— "सर्वाँ अग्नीँ रप्सुषदः" (सं. ५—६—१) । "शत्रूँ रनपव्ययन्तः" (सं. ४—६—६) । ऊष्मभावात्—"अँहींश्च सर्वाँ जम्भयन्" (सं. ४—५—१) । "शततर्हाँस्तृंहन्ति" (सं. ५—४—७) । यकारभावात्[2]—"महाँ य इन्द्रो न ओजसा" (सं. १—४—२०) । लुप्ते च—"महाँ इन्द्रः" (सं. १—४—२०) । "लुप्येते त्ववर्णपूर्वौ यवकारौ" (१०—१९), "नोख्यस्य च" (१०—२०) इति । मकारलोपात्—"प्रत्युष्टँ रक्षः" (सं. १—१—२) । "सँशितं मे ब्रह्म" (सं. ४—१—१०) । "त्वं यज्ञेष्वीड्यः" (सं. १—१—१४) । "तँ वा एतँ यजमान एव चिन्वीत" (सं. ५—६—९) ॥

नैकेषाम् ॥ २ ॥

एकेषां शाखिनां न पूर्वस्वरोऽनुनासिको भवति । तान्येवानुनासिकान्युदाहरणानि ॥

ततस्त्वनुस्वारः ॥ ३ ॥

---

1. सूत्रस्थचशब्दः यकाराकर्षकः ।
2. यकारभावाद्यकारे लुप्ते सतीदमुदाहरणम् "महाँ इन्द्रः" इत्यादि ।

तस्मादनुनासिकात् स्वरात्परः अनुस्वारागमो भवति। यथा—"ये वा वनस्पतीँ रनु" (सं. ४—२—८)। "अस्मिँश्चामुष्मिँश्च" (सं. ७—३—४)। "महाँ इन्द्रो य ओजसा" (सं. १—४—२०)। "ताँ रुद्रोऽवासृजत् स तिस्रः" (सं. ६—२—३)। [1]तुशब्दः तत इति सर्वनाम्ना परामृष्टस्य स्वरस्यानुनासिकगुणं विनिवर्त्तयति। तस्मादनुनासिकप्रतिषेधपक्षेऽपि अनुस्वारागमः स्यात्॥

स्रादिषु चैकपद ऊष्मपरः॥ ४॥

स्रादिषु च एकपदेषु ऊष्मपरे सति अनुस्वारागमो भवति। यथा—"शोँसा मोद इव" (सं. ३-२-९)। एकपद इति किम्? "तं मा सँसृज वर्चसा" (सं. १—४—४५)। ऊष्मपर इति किम्? "याश्च माया मायिनां विश्वमिन्व" (सं. ३—१—११)॥

नान्तविकारात् पूर्वः॥ ५॥

न खलु पदान्तविकारात् पूर्वस्मिन् अनुस्वार आगमो भवति। यथा—"बहिस्ते अस्तु" (सं. ३-३-१०)। "हि पु जिगा०" (१६-१३) इति प्राप्तिः। अन्तविकारादिति किम्? "मा हिँसीर्द्विपादं पशूनाम्" (सं. ४—२—१०)॥

अप्रग्रहाः समानाक्षराण्यनुनासिकान्येकेषाम्॥ ६॥

एकेषामाचार्याणां यानि समानाक्षराणि [2]अप्रग्रहसंज्ञानि तान्यनुनासिकानि भवन्ति। यथा—"दधि मधु" (सं. २—३—२)। अप्रग्रहा

---

1. "परामृष्टस्वरस्यानुनासिक्यं गुणं तुशब्दो निवर्त्तयति। तस्मादनुनासिकप्रतिषेधपक्ष एवायमनुस्वारागमः स्यात्"। त्रि०।

2. "अप्रग्रहा इति प्रग्रहव्यतिरिक्तानां तत्सदृशानामेव ग्रहणम्; यथा—अब्राह्मण इति क्षत्रियादेः। तदयमर्थः—प्रग्रहव्यतिरिक्तानि पदान्तभूवानि समानाक्षराणि अनुनासिकानि भवन्ति इत्येकेषां मतम्"। वै०।

इति किम् ? "वैष्णवी इति" (सं. १—३—२)। "हनू इति" (सं. ६—२—११) ॥

पदं च प्लुतँ शांखायन-काण्डमायनयोः ॥ ७ ॥

शांखायन-काण्डमायनयोराचार्ययोः पदं च प्लुतं अनुनासिकं भवति। यथा—"त्वी३ इत्यब्रवीत्" (सं. २—४—१२)। पदमिति किम्? संहितायां मा भूत्। चकारः पूर्वसूत्रोक्तविधिं समुच्चिनोति। अपर आहुः—प्लुतैकवर्णं पदमिति अन्यदनुनासिकं भवति। मा भूत्। यथा—"छिनत्ती३ इति" (सं. १—७—२) ॥

अकारस्तु सँहितायामपि ॥ ८ ॥

अकारः प्लुतः संहितायामपि पदकालेऽपि अनुनासिको भवति। यथा—"सुश्लोका३म् सुमङ्गला३म्" (सं. १—८—१६)। "यद्ग्रा३म्" (आ. ५—१) इत्यन्यस्यां शाखायाम्। संहितायामपीति किम्? "सुश्लोका३म् इति सु-श्लोकाम्" (सं. १—८—१६)। आचार्यपक्षविनिवर्त्तकस्तुशब्दः[1]। अतः शांखायन-काण्डमायनयोरप्ययं विधिः ॥

सर्वमेकयमं पूर्वेषाम् ॥ ९ ॥

तानः, यज्ञकर्म्मणि ब्रह्मेशानप्रभृतीनां सर्वमेकयमं[2] भवति। तस्मादेकश्रुत्यैव यज्ञकर्म्मसु मन्त्रा अभिधीयन्ते ॥

इति छन्दोभाषायां द्वितीयप्रश्ने

तृतीयोऽध्यायः ॥

---

1. "तुशब्दः प्राकृताचार्यमतनिवर्त्तकः। अत एव संहितायामसंहितायां च अकारः पदान्तः प्लुतोऽनुनासिको भवति। यद्यप्यकार इति सामान्येनोक्तः, तथापि "अन्वादेशोऽन्त्यस्य" (१—५८) इतिवचनादपिशब्दोऽनुनासिकधर्मतया निमित्तिनं पदान्तमेवाकारमन्वादिशति"। त्रि०।

2. यमो नाम स्वरः, उदात्त इत्यर्थः।

## अथ चतुर्थोऽध्यायः ॥

### अथ सकारपरः[1] ॥ १ ॥

अथेत्यधिकारः । सकारपर इत्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

### [2]स्र-शो-ह-पा-श-पदादयः स्वरपरे ॥ २ ॥

स्र, शो, ह, पा, श, पदादयः, स्वरपरे । इत्येतेषु च पदादिषु सकारे स्वरपरे अनुस्वारागमो भवति । यथा—"यत्तान्न वि स्रँसयेत्" (सं. ६—२—९) । "शोँसा मोद इव" (सं. ३–२–९) इति । "हँसः शुचिषत्" (सं. १–८–१५) । "पाँसून्" (सं. २–६–१०) । "प्रान्यः शँसति यः" (सं. ७—५—९) । पदादय इति किम् ? "अग्निरुक्थेन वाहसा" (सं. १–५–११) । स्वरपर इति किम् ? "सजनीयँ शस्यं विहव्यँ शस्यम्" (सं. ७–५ ५) ॥

### विकृतेऽपि ॥ ३ ॥

[3]विकारमापन्नेऽपि स्वरे अनुस्वारागमो भवति । यथा—"रक्षाँस्यप-हँस्यग्ने" (सं. ४—७—१३) ॥

### रापूर्वश्च ॥ ४ ॥

---

1. "पराः" मु० । भू० ।
2. "स्रसोहपादापदयस्व" भू० ।
3. स्वरे विकारं व्यञ्जनतामापन्नेऽपीत्यर्थः ।

श इति चशब्दो ज्ञापयति। श इत्येतस्मिन् ग्रहणे रापूर्वे सकारपरे अनुस्वारागमो भवति। यथा—"नाराशँसीभ्यः" (सं. ७—५—११)॥

शस्ँता[1] नान्तोदात्ते ॥ ५ ॥

शँस्ता इत्येतस्मिन् नान्तोदात्ते पदे सकारपरे अनुस्वारागमो भवति। अन्तोदात्तप्रतिषेधादाद्युदात्तस्य विधिर्भवति। यथा—"उत शँस्ता सु विप्रः" (सं. ४-६-८)। नान्तोदात्त इति किम्? "अश्वस्या विशस्ता" (सं. ४—६—९)॥

[2]शँसन् ॥ ६ ॥

शँसन् इत्येतस्मिन् ग्रहणे अनुस्वारागमो भवति। यथा—"ज्यायच्छन्दोऽभिर्व्यशँसन्" (सं. ६-६-११)। किमर्थमिदम्? "स्रशोहपाशपदादयः स्वरपरे" इति सिद्धम्। "अप्यकारादि" (१—५२) वचनात्। नैष दोषः। अप्यकारादिवचनं पदस्य न पदावयवस्य॥

न शसनं विशसनेन ॥ ७ ॥

न खलु शसनम्, विशसनेन इत्येतयोरनुस्वारागमो भवति। यथा—"शसनं वाज्यर्त्रो देवद्रीचा" (सं. ४—६—७)। "शुनो विशसनेन सर्पान्" (सं. ५—७—२३) इति। प्रतिषेधसामर्थ्यात् शंसन् इत्येतस्य च "स्रशोहपाशपदादयः स्वरपरे" इत्येतस्य चायं प्रतिषेधः क्रियते। अन्यथा ह्यनर्थकमेव स्यात्॥

मापदादिरनुदात्तः ॥ ८ ॥

---

1. "स्तानन्तो" भू० । मु० ।
2. "अशंसन्" मु० । भू० ।

मा इत्येतस्मिन् ग्रहणे पदादौ वर्त्तमाने अनुदात्ते सकारपरे अनुस्वारागमो भवति । यथा—"द्वाभ्यां मँाँसं द्वाभ्याम्" (सं. ७—४—९) । पदादिरिति किम् ? "चित्रापूर्णमासे दीक्षेरन्" (सं. ७-४-८) । अनुदात्त इति किम् ? "मासं दीक्षितः स्याद्यो मासः" (सं. ५—६—७) ॥

पू-मीपूर्वश्च नित्यम् ॥ ९ ॥

मा इति चशब्दो ज्ञापयति । पूपूर्वे मीपूर्वे च मा इत्येतस्मिन् ग्रहणे सकारपरे नित्यमनुस्वारागमो भवति । यथा—"परास्यन्त्युत्पुमाँसँ हरन्ति" (सं. ६-५-१०) । "मीमाँसन्ते ब्रह्मवादिनः तद्वाहुः" (सं. ७-५-७) । नित्यमिति किम् ? उदात्ते वा स्वरिते वा मा इत्येतस्मिन् यथा स्यादिति ॥

सकायपरश्च ॥ १० ॥

चशब्दो मा इत्यन्वादिशति । मा इत्येतस्मिन् सकायपरे नित्यमनुस्वारागमो भवति । यथा—"अमाँसकाय स्वाहा" (सं. ७-५-१२) । नित्यमिति किम् ? अपदादावपि मा इत्येतस्मिन् यथा स्यादिति ॥

नावग्रहपूर्वः ॥ ११ ॥

न खल्ववग्रहपूर्वे मा इत्येतस्मिन् सकारपरेऽप्यनुस्वारागमो भवति । यथा—"अर्द्धमासे देवा इज्यन्ते" (सं. २—५—६) ॥

मासि-मासु-मासो-मासामिति च ॥ १२ ॥

मासि, मासु, मासः, मासाम् इत्येतेषु ग्रहणेषु न खल्वनुस्वारागमो भवति । चशब्दो "मापदादिरनुदात्तः" (१६—८) इति योऽनुस्वारः प्राप्तः तस्य प्रतिषेधमन्वादिशति । यथा—"प्रथमे मासि पृष्ठानि" (सं. ७-५-३) इति केचिदुदाहरन्ति । "न पदे द्विस्वरे नित्यम्" (१६—१७) इति तस्य

प्रतिषेधः सिद्धः। "दशसु मासूत्तिष्ठन्नृध्नोति" (सं. ७—५—२)। "षण्मासो दक्षिणेनैति" (सं. ६—५—३)। "मासां प्रतिष्ठित्या उपरिष्टात्" (सं. ७—५—१)॥

हि पु जिगा जिघा छंसिनेऽतँसयदातांँसीत् कनीयान् ज्याया[1]न् द्राघी[2]यान् रघीया[3]न् श्रेया[4]न् ह्रसी[5]यान् वसीयान्[6] भूयान् भूयाँसो जक्षिवा जघ्निवा जि[7]गिवा तस्थिवा दाश्वा दीदिवा पपिवा पीपिवा विद्वा विविशिवा शुश्रुवा सस्रुवा ॥ १३ ॥

हि, पु, जिगा, जिघा, छँसिने, अतँसयत्, आतांँसीत्, कनीयान्, ज्यायान्, द्राघीयान्, रघीयान्, श्रेयान्, ह्रसीयान्, वसीयान्, भूयाँसः, जक्षिवा, जघ्निवा, जिगिवा, तस्थिवा, दाश्वा, दीदिवा, पपिवा, पीपिवा, विद्वा, विविशिवा, शुश्रुवा, सस्रुवा। हि पु इत्येवमादिषु ग्रहणेषु अनुस्वारागमो भवति। यथा—"मा हिँसीस्तनुवा प्रजाः" (सं. ४—२—३)। "पुँसः पुत्रान्" (सं. ४—६—९)। "सुवर्गं लोकमजिगाँसन्" (सं. ५—५—५)। "देवा वै त्वष्टारमजिघाँसन्" (सं. ६—५—८)। "ऋषभं ब्राह्मणाच्छँसिने" (सं. १—८—१८)। छँसिन इति किम्? "कदाचन प्रयुच्छस्युभे" (सं. १—४—२२)। "गभे मुष्टिमतँसयत्" (सं. ७—४—१९)।

---

1. "ज्याया द्रा" मु०। भू०।
2. "घीया र" मु०। भू०।
3. "रघीया श्रे" मु०। भू०।
4. "श्रेया ह्र" मु०। भू०।
5. "सीया व" मु०। भू०।
6. भूयानिति नास्ति। मु०। भू०।
7. "जिगिवा जीगिवा त" मु०। भू०

अतँसयदिति किम् ? "अतसं न शुष्कम्" (सं. १–२–१४)। "अन्वाताँसीत्त्वयि तन्तुमेतम्" (सं. ४—७—१३) । आताँसीदिति किम् ? "अनुव्रातासस्तव सख्यम्" (सं. ४—६—७) । "कनीयाँसो देवा आसन्" (सं. ५—३—११)। "अग्नेस्त्रयो ज्यायाँसः" (सं. २–६–६)। "पक्षौ द्राघीयाँसौ भवतः" (सं. ५—२—५) । "अथो रघीयाँसः सुवर्गम्" (सं. ७—४—९) । प्र श्रेयाँसं भ्रातृव्यम्" (सं. २—४—१)। "अथ ह्रसीयाँसमेषा वै" (सं. ६—६—४)। "यथा वसीयाँसं प्रत्यपोर्णुते" (सं. ६–१–३)। "भूयाँसोऽसुरास्ते देवाः" (सं. ५–३–११)। भूयाँस इति किम् ? "अन्नादो भूयासम्" (सं. १—६—२)। "जक्षिवाँसः पपिवाँसश्च" (सं. १–४–४४)। "इन्द्रं वृत्रं जघ्निवाँसम्" (सं. २—५—३)। "जक्षिवाँसः पपिवाँसश्च" (सं. १—४—४४)। "इन्द्रं वृत्रं जघ्निवाँसम्" (सं. २—५—३)। "जिगिवाँसो बृहस्पते" (सं. १—७—८)। "भागं जीगिवाँसः स्याम" (ब्रा. २—८—६)। "तस्थिवाँसो जनानाम्" (सं. १—२—१४)। "दाश्वाँसो दाशुषः" (सं. १—४—१६)। "दीदिवाँसमपां नपातम्" (सं. २—५—१२)। "पपिवाँसश्च" (सं. १—४—४४) । पीपिवाँसँ सरस्वतः" (सं. ३—१—११) । "विद्वाँसो वै पुरा" (सं. २—५—११)। "प्र वि विशिवाँसमीमहे" (सं. ४—७—१५)। "यच्छुश्रुवाँसः कविशस्त इति" (सं. २–५–९)। "वाजँ ससृवाँसः" (सं. १–७–८)। दाश्वा विविशिवा शुश्रुवा एतेषु शकारपरेषु "स्रादिषु चैकपद ऊष्मपरः" (१५—४) इति अनुस्वारागमः कस्मान्न भवति ? अथ "सकारपरः" इति सकारपरत्वस्यानुवृत्तेः । ह्रसीया वसीया तस्थिवा ससृवा इत्येतेषु पूर्वस्मिन्ननुस्वारस्थाने सकारपरे वकारपरेऽप्यनुस्वारागमो भवति । [1]तेषामनुस्वाररहितानामेवास्मिन् सूत्रे निर्देशात् । अथवा आताँसीत् कनीयान् ज्यायान् इत्येवमादिभिराकारैरनुस्वारस्थानैः साहचर्यात् पूर्वस्मिन् ह्रस्वे अकारे अनुस्वरागमो न भवति ॥

1. अनेन कनीयानित्यादिषु अनुस्वारसहित एव पाठो युज्यत इति ज्ञायते ।

अकारेकारोकाराः सि-षिपराः पदान्तयोः ॥ १४ ॥

सि, षि, इति परनिमित्तयोः निर्देशात् सकारपराविति निवृत्तम् । अकारः, इकारः, उकारः, इत्येतेषु सिपरेषु वा षिपरेषु वा अनुस्वारागमो भवति, सिष्योः पदान्तयोः । यथा—"वयाँसि पक्वगन्धेन" (सं. ५—७—२३) । "ज्योतीँषि कुरुते" (सं. ५—४—१) । "अग्न आयूँषि पवसे" (सं. १–३–१४) । पदान्तयोरिति किम् ? "तस्माद्वासिष्ठो ब्रह्मा कार्यः" (सं. ३—५—२) ॥

विकृतेऽपि ॥ १५ ॥

सिषीत्यपिशब्दो ज्ञापयति । सिषिपरयोर्विकृतेऽपि स्वरे अनुस्वारागमो भवति । यथा—"तव ज्योतीँष्यर्चयः" (सं. १—३—१४) ॥

अनाकारो ह्रस्वँ साङ्कृत्यस्य ॥ १६ ॥

अनाकार इति ईकार ऊकार इत्यर्थः । अकारेकारोकाराणामेव प्रकृतत्वात् । आकारस्य च प्रतिषेधः । साङ्कृत्यस्य शाखिनो मतेन तस्मिन् विषये ईकारश्च ऊकारश्च ह्रस्वमापद्यते नाकारः । "हवीँषि" (सं. ५–५–१) । "अग्न आयूँषि" (सं. १—३—१४) । अनाकार इति किम् ? "वयाँसि पक्वगन्धेन" (सं. ५—७—२३) ॥

न पदे द्विस्वरे नित्यम् ॥ १७ ॥

न खलु द्व्यक्षरे पदे सिषिपरे नित्यमनुस्वारागमो भवति । "स्तुतो यासि वशाँ अनु" (सं. १—८—५) । नित्यमिति किम् ? "विषतः पासि नु त्मना" (सं. १—३—१४) । "स्रशोह्पाश०" (१६—२) इत्यादिना प्राप्तिः । "प्रथमे मासि पृष्ठानि" (सं. ७—५—३) । "मापदादिरनुदात्तः" (१६—८) इति प्राप्तिः ॥

ऋजीषि जिगासि जिघास्यजासि यजासि ददासि दधासि वर्त्तयासि च ॥ १८ ॥

ऋजीषि, जिगासि, जिघासि, अजासि, यजासि, ददासि, दधासि, वर्त्तयासि । नेति चशब्दोऽन्वादिशति । ऋजीषीत्येवमादिषु न खलु अनुस्वारागमो भवति । यथा—"तेनर्जीषि सर्वाण्येव तत्" (सं. ३–२–२) । "अच्छा जिगास्यच्छा देवान्" (सं. ४—२—४) । जिघासीत्यन्यस्यां शाखायाम् । "आ त्वमजासि" (सं. ७—४—१९) । "हविषा यजास्यग्ने बृहत्" (सं. ३–५–११) । "याभिर्ददासि दाशुषे वसूनि" (सं. ३–३–११) । "वाजमुकृथ्यं दधासि दाशुषे कवे" (सं. ४—२—७) । "पुनरश्वमां वर्त्तयासि नः" (सं. ७—४—२०) ॥

दँसनाभ्यो दँसोभिर्दँसं वृषदँशो दँशुका दँष्ट्राभ्यां परः ॥ १९ ॥

दँसनाभ्यः, दँसोभिः, दँसम्, वृषदँशः, दँशुका, दँष्ट्राभ्याम् । दँसनाभ्य इत्येवमादिषु ग्रहणेषु परस्मिन्ननुस्वारस्थाने अनुस्वारागमो भवति । यथा—"वैश्वानरस्य दँसनाभ्यः" (सं. १—५—११) । "सजोषावश्विना दँसोभिः" (सं. ५—६—४) । "इडामग्ने पुरु दँसँ सनिं गोः" (सं. ४—२—४) । "वृषदँशस्ते" (सं. ५—५—१२) । "पशून्दँशुका स्युः" (सं. ५—२—९) । "दँष्ट्राभ्यां मलिम्लून्" (सं. ४—१—१०) । पर इति किम्? वृषदँश इत्यत्र षकारपरे पूर्वस्मिन्ननुस्वारस्थाने न भवति ॥

मँस्ये मँसतै यँसद्यँसन्वँसते वँसगः ॥ २० ॥

मँस्ये, मँसतै, यँसत्, यँसन्, वँसते, वँसगः,[1] इत्येतेषु ग्रहणेषु ऊष्मपरेषु अनुस्वारागमो भवति। यथा–“पशूनाभि मँस्ये” (सं. ३–१–९)। इति। “अनु नौ शूरमँसतै भद्राः” (सं. ७—४—१५)। “अग्निस्तिग्मेन शोचिषा यँसद्विश्वम्” (सं. ४–६–१)। “अस्मभ्यमिषवः शर्म यँसन्” (सं. ४–६–६)। “अग्निर्नो वँसते रयिम्” (सं. ४–६–१)। “तिग्मशृङ्गो न वँसगः” (सं. २—६—११)॥

उन्न वँशम्॥ २१॥

उत्, न इत्येवंविशिष्टे वंश इत्येतस्मिन्ननुस्वारागमो भवति। यथा—“उद्वँशमिव येमिरे” (सं. १—६—१२)। “प्राचीनवँशं करोति” (सं. ६—१—१)। उन्नेति किमर्थम्? “ब्रह्मवर्चस्येव भवति वशं वा एष चरति” (सं. २—१— ७)॥

अक्रँस्त[2] क्रँस्यते रँस्यते भ्रँशते[3]॥ २२॥

अक्रँस्त, क्रँस्यते, रँस्यते, भ्रँशते, इत्येतेषूष्मपर अनुस्वारागमो भवति। यथा—“द्यां वाज्याऽक्रँस्त सूर्यम्” (सं. ७—५—१९)। “उत्क्रँस्यते स्वाहा” (सं. ७—१—१९)। “नास्माद्राष्ट्रं भ्रँशते” (सं. ५—७—४)॥

---

1. “‘मँस्’, ‘यँस्’, ‘वँस्’ इत्येतावतैवालम्, किमखिलपदपाठेन? ‘उत्तमस्याव द्यति’ (सं. ६—३—१०), ‘यस्य भूयाँसः’ (सं. ३–१–७), ‘अग्र वसु वसति’ (सं. २–५–३), इत्यादौ मा भूदिति” त्रि०।

2. “क्रँस्तोत्क्रँ” मु०। भू०।

3. “ते रँह्ये च”। मु०।

रँह्यै चैकार[1] उख्यस्य नितान्तः ॥ २३ ॥

रँह्या इत्येतस्मिन् ग्रहणे अनुस्वारागमो भवति, ऐकारस्य च नितान्तो भवति, उख्यस्य शाखिनो मतेन । नितान्तः तीव्रप्रयत्न इत्यर्थः । यथा—"पूष्णो रँह्या अपामोषधीनाम्" (सं. १—३—१०) ॥

वि-रि-त्रि संख्यासु ॥ २४ ॥

वि, रि, त्रि, इत्येतेषु अनुस्वारागमो भवति संख्या चेदभिधेया स्यात्, असुन्शब्दं वर्जयित्वा । सु इति सप्तमीविभक्तिरुक्ता भवति । यथा—प्रथमा अःकारेण । तेन सु इत्येतस्यापि पर्युदासः स्यात् । यथा—"विँशत्यै स्वाहा" (सं. ७—२—१७) । "चत्वारिँशते स्वाहा" (सं. ७—२—१७) । "त्रिँशते स्वाहा" (सं. ७—२—१७) । संख्येति किम् ? "प्र वि विशिवांसमीमहे" (सं. ४—७—१५) । असु(न्) इति किम् ? "त्रिष्वा रोचने दिवः" (सं. ४—२—४) ॥

शिँशुमारः शिँषत् सँश्वा[2] सँस्रा[3] सँस्कृत्य[4] सँस्कृतं किँशिल ॥ २५ ॥

शिँशुमारः, शिँषत्, सँश्वा, सँस्रा, सँस्कृत्य, सँस्कृतम्, किँशिल, इत्येतेषूष्मपरेषु[5] अनुस्वारागमो भवति । यथा—"सिन्धोः शिँशुमारः" (सं. ५—५—११) । "किन्तत उच्छिँषतीति" (सं. ५—५—५) ।

---

1. 'रँह्यै च' इत्ययमंशो नास्ति । मु० । "रँहै च", "ऐकार उख्यस्य नितान्तः" इति प्रत्येकं व्याख्यातम् भू० ।
2. "संश्वा सं" आ० ।
3. "संस्रा संसृष्ट संस्कृ" भू० ।
4. "संस्कृत्य किंशी किंशिल" आ० । "संस्कृत्यसंस्कृतसंशितसंसदःसंशिता-किंशिल" भू० । "संस्कृत्यसंसृष्टसंस्कृतंसंशितः संशिता किंशिल" मु० ।
5. ऊष्मपरेष्विति कथं लभ्यते ?

"उभयतः सँश्वायि कुर्यात्" (सं. २—६—८)। "सँस्नावभागास्स्थ" (सं. १—१—१३)। "शरीरमेव सँस्कृत्य" (सं. ५—६—६)। "तन्नस्सँस्कृतम्" (सं. १—४—४३)। "किँशिल वन्य या" (सं. ५—५—९)। "किँशिलश्चतुर्थः" (सं. ५—५—९)। "किँशिलाय च क्षणाय च" (सं. ४—५—९)। किंशिलेत्येतावत्येवोक्ते "अग्ने दुध्रगह्यकिँशिलवन्य" (सं. ५—५—९) इत्यत्र पदस्यैव ग्रहणं स्यान्न पदैकदेशस्य। "किँशिलाय" इत्येवमादौ कस्मात्? "पदग्रहणेषु पदं गम्यते" (१—५०) इति वचनात्। द्वितीयकिँशिलग्रहणे सति "ग्रहणस्य च" (१—२२) इति ग्रहणात् किंशिलायेत्येवमादेरपि सिध्यत्येव ॥

सि-तृ-द्द-हकारपरः ॥ २६ ॥

सितृद्दहकारपरेष्वनुस्वारागमो भवति। यथा—"सिँहो नकुलो व्याघ्रः" (सं. ५—५—२१)। "वितृँहाणास्तिष्ठन्त्येतामेव" (सं. २—२—११)। "प्राणन्दृँहापानं दृँह" (सं. १—१—७)। हकारपर इति किम्? "शृङ्गाणि सिषासन्तीस्तासाम्" (सं. ७—५—२)॥

मँहिष्ठस्य च ॥ २७ ॥

चशब्दो हकारपरस्थानमन्वादिशति। मँहिष्ठस्येत्येतस्मिन् ग्रहणे हकारपरोऽनुस्वारागमो भवति। यथा—"मँहिष्ठस्य प्रभृतस्य स्वधा वः" (सं. ४—२—३)। हकारपर इति किम्? षकार-सकारपरावपि स्तः, तन्मा भूदिति ॥

आदिरँहतिरँहो हँहोरँहो[1] मुगँहसोहँसाँशमँशभुवाँशुरँशू[2] अँशवोऽशुमँशून्[3] अँशुनाँशोरँशायोपाँशु अँशावँशु[4] ॥ २८ ॥

---

1. "मुगँहसोहसां" आ०। "मुगत्यँहा अँहसोँऽहसा" मु०।
2. "मँशुभिरँशभुवाँश्वँशू" मु०।
3. "अँशवोऽशुरँशुमँशूनँशुना" मु०।
4. "वँश्चवग्रहः" आ०। "पाँश्वँशाववग्रहे" मु०। भू०।

अँहतिः, अँहः, अँहोः, अँहोमुक्, अँहसः, अँहसा, अँशम्, अँशभुवा, अँशुः, अँशू, अँशवः, अँशुम्, अँशून्, अँशुना, अँशोः, अँशाय, उपाँशु, अँशौ, अँशु । अंहतिरित्येवमादिषु आदिरनुस्वारागमो भवति । यथा— "परिद्वेषसो अँहतिः" (सं. २—६—११) । "पाप्मा वा अँह इन्द्रम्" (सं. २—२—७) । "अँहोश्चिद्या वरिवो वित्तरासत्" (सं. १-४-२२) । "द्यावापृथिवीभ्यामँहोमुग्भ्यां द्विकपालः" (सं. ७—५—२२) । "प्र मुञ्चन्तो नो अँहसः" (सं. ४—३—१३) । "अँहसा वा एष गृहीतः" (सं. २—४—२) । "तस्यामँशमाहरन्त तामप्सु प्रावेशयन्" (सं. ७—१—६) । "राजानमँशभुवा घ्नन्ति" (सं. ६—४—८) । "अँशुः पृच्यताम्" (सं. १—२—६) । "वृष्णो ह्येतावँशू" (सं. ६—४—५) । "प्राणा वा अँशवः पशवः" (सं. ६—४—४) । "यदध्वर्युरँशुं गृण्हन्नार्द्धयेत्" (सं. ६—६—१०) । "अँशूनप गृण्हाति" (सं. ६-४-४) । "अँशुना ते अँशुः पृच्यताम्" (सं. १-२-६) । "यो वा अँशोरायतनं वेद" (सं. ६—६—१०) । "अँशाय स्वाहा" (सं. १—८—१३) । "उपाँशु सवनो यदुपाँशु सवनमभि" (सं. ६—४—४) । "उपाँशौ समस्थापयन्" (सं. ६—४—६) । अँशु इति स्वरूपपदग्रहणं च गृह्यते । यथा—"तानुपाँशु गृण्हीयात्" (सं. ३—१—९) । "तेनाँशुमत्" (सं. ३—२—२) । "अँशुभ्यां गभस्तिपूतः" (सं. १—४—२) । "षड्भिरँशुभिः पवयति" (सं. ६—४—५) । "अप्यकारादि" (१—५२) वचनात् "अनँशु कुर्वन्तः" (सं. ३—२—२) ॥

[1]उदात्तोँऽसेँऽसायाँसाभ्यामँसाविति ॥ २९ ॥

अँसे, अँसाय, अँसाभ्याम्, अँसौ, इत्येतेषु ग्रहणेषु उदात्तेषु अनुस्वारागमो भवति । यथा—"दक्षिणेऽसँ उप दधाति" (सं. ५—३—१) ।

---

1. सूत्रादौ 'अवग्रह' इत्यधिकम् । भू० ।

"शित्यँसाय स्वाहा" (सं. ७—३—१७)। "अँसाभ्याँ स्वाहा" (सं. ७—३—१६)। "अँसावेव प्रति दधाति" (सं. ५—३—१)। उदात्त इति किम्? "असावब्रवीत् चित्रविहिताहम्" (सं. २—५—२)॥

नासावा ॥ ३० ॥

न खलु असावा इत्येतस्मिन् ग्रहणे अनुस्वारागमो भवति। यथा—"अथो यथा ब्रूयादसावेहीति" (सं. २—४—९)॥

इति प्रातिशाख्यव्याख्यायां माहिषेयछन्दोभाषाख्यायां

चतुर्थोऽध्यायः ॥

---

अथ पञ्चमोऽध्यायः ॥

## तीव्रतरमानुनासिक्यमनुस्वारोत्तमेष्विति शैत्यायनः ॥

शैत्यायनस्याचार्यस्य मतेन अनुस्वार उत्तमे च तीव्रतरमानुनासिक्यं भवति। यथा—"एन्द्र सानसिं रयिम्" (सं. ३—४—११)। "यं कामं कामयते" (सं. ७–१–१)। "वञ्चते स्वाहा" (सं. ७–४–२२)। "राष्ट्रं वै वैश्वानरो विण्मरुतः" (सं. ५—४—७)। "बृहस्पतिर्नः" (सं. ३—३—११)। "सोऽस्मात्सृष्टः प्राङ् प्राद्रवत्" (सं. ५–७–१०)। अनुस्वारोत्तमेष्विति किम् ? "रुक्ममुप दधाति" (सं. ५–२–७)। "तिग्म-मायुधम्" (सं. ४–७–१५) ॥

## समं सर्वत्रेति कौहलीपुत्रः ॥ २ ॥

सर्वत्र सममेवानुनासिक्यं भवतीति कौहलीपुत्रस्य शाखिनो मतेन। यथा—"सपत्न साहं सम्मार्ज्मि" (सं. १—१—१०) ॥

## अनुस्वारेऽ[1]ण्विति भारद्वाजः ॥ ३ ॥

भारद्वाजाचार्यस्य मतेन अनुस्वारे आनुनासिक्यं अणु भवति। यथा—"तनु वा जय त्वँ स त्वा वर्मणः" (सं. ४—६—६)। अनुस्वार इति किम् ? "ब्रह्मण्वन्तो देवा आसन्" (सं. ६—४—१०)। "रुक्ममुप दधाति" (सं. ५—२—७)। "तत्संयताँ संयत्त्वम्" (सं. ५—२—१०)। "इषे त्वोर्जे त्वा" (सं. १—१—१) ॥

---

1. "रेऽन्विति" आ० ।

नकारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्चोत्तर-मुत्तरं तीव्रतरमिति स्थविर[1]कौण्डिन्याः ॥ ४ ॥

कौण्डिन्यस्य मतेन नकारस्य रेफभावादूष्मभावाद्यकारभावाल्लुप्ते च तस्मिन् यकारे मलोपाच्च इत्येतेषूत्तरमुत्तरं तीव्रतरमापद्यते । आनुनासिक्यं भवति । यथा—"स त्रीँ रेकादशान्" (सं. ३—२—११)। इह तस्मात् (?) "सर्वाँश्चतुरः पदः प्रति दधत्" (सं. ५—४—१२)। "ताँस्ते दधामि जम्भयोः" (सं. ४—१—१०) । "महाँ इन्द्रो यः" (सं. १—४—२०) । "शतँ सेना अजयत्" (सं. ४—६—४)। नकारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्चेति किम् ? "यत्तन्न विस्रँसयेत्" (सं. ६—२—९)। "शोँसो मोद इव" (सं. ३-२-९)॥

व्यञ्जनकालश्च स्वरस्यात्राधिकः[2] ॥ ५ ॥

व्यञ्जनकालः ह्रस्वार्धकालमात्रः अत्रानुस्वारविधौ स्वरस्याधिको भवति । यथा—"युञ्जाथाँ रासभं युवम्" (सं. ४—१—२)। एवं सर्वत्र । चशब्दः स्थविरकौण्डिन्यमतमन्वादिशति ॥

स्वारविक्रमयोर्दृढप्रयत्नतरः पौष्करसादेः ॥ ६ ॥

[3]स्वारविक्रमयोः पौष्करसादेर्मतेन अन्येभ्यो दृढप्रयत्नतरो [4]भवति । यथा—"योऽस्य स्वोऽग्निस्तमपि" (सं. ५—७—९)। स्वारविक्रमयो-रिति किम् ? "गां वाव तौ तत्" (सं. १—७—२) ॥

प्रयत्नविशेषात् सर्ववर्णानामिति शैत्यायनः ॥ ७ ॥

---

1. "रः कौण्डिन्यः" मु० ।
2. "धिकारः" आ० ।
3. स्वारः स्वरित इत्यर्थः । विक्रमो नामानुदात्तविशेषः ।
4. प्रयोग इति शेषः ।

शैत्यायन आचार्यो मन्यते प्रयत्नविशेषात् सर्ववर्णानां वैशेष्यं भवति। तस्मात् दृढप्रयत्नतर एव सर्ववर्णेषु भवति। न स्वारविक्रमयोरेवेति। यथा—"इषे त्वोर्जे त्वा" (सं. १—१—१)॥

नातिव्यक्तं न चाव्यक्तमेवंवर्णानुदिङ्गयेत्[1]।
पयःपूर्णमिवामत्रं हरन् धीरो यथामतिः॥

इत्यात्रेयः॥ ८॥

नातिव्यक्तं अतिव्यक्तं न वक्तव्या वर्णाः; न चाव्यक्तं अव्यक्तं न वक्तव्याः; एवं वर्णानुदिङ्गयेत्, अनेन विधानेन वर्णा उच्चरितव्या भवन्ति; पयःपूर्णमिवामत्रं दुग्धपूर्णमिव भाजनम्; हरन्धीरो यथामति रिति हरन् बुद्धिमान् यथामतिर्भवति तद्वदेकाग्रमनाः, वक्तव्याः; इत्येवमात्रेयो नामाचार्यो मन्यते॥

इति माहिषेयछन्दोभाषाख्यायां प्रातिशाख्यव्याख्यायां
द्वितीयप्रश्ने पञ्चमोऽध्यायः॥

---

1. "नुदीरयेत्" मु०।

## अथ षष्ठोऽध्यायः ॥

### ओकारं तु प्रणव एकेऽर्धतृतीयमात्रं ब्रुवते ॥ १ ॥

ओमित्येष शब्दः प्रणवः, तस्मिन् प्रणवे अर्द्धतृतीयकालमात्रमोकारं ब्रुवते ; अर्द्धं तृतीयं यस्य सोऽयमर्द्धतृतीयः ; तावन्मात्रमेके आचार्या ब्रुवते। यथा—"ओम्" ॥

### उदात्तानुदात्तस्वरितानां कस्मिँश्चिदिति शैत्यायनः ॥

प्रणव उदात्तेन वा अनुदात्तेन वा स्वरितेन वा एतेषामन्यतमेन स्वरेण वक्तव्य इति व्याख्या कर्त्तव्येति शैत्यायनो मन्यते । यथा—"ओम् ओम् ओम्" ॥

### [1]धृतप्रचयः कौण्डिन्यस्य ॥ ३ ॥

कौण्डिन्यस्य धृतप्रचयः प्रणवस्वरो भवति। यथा—"ओम्" ॥

### मध्यमेन स वाक्प्रयोगः ॥ ४ ॥

स च प्रणवः मध्यमेन वाचःस्थानेन प्रयोक्तव्यो भवति[2]। यथा—"ओम्" ॥

### स्वरितः प्लाक्षि-प्लाक्षायणयोः ॥ ५ ॥

---

1. "तः प्र" मु० । चतुर्थः स्वरो धृतप्रचय इति कथ्यते (प्रचयः) ।
2. स च प्रणवः मध्यमेन उच्चनीचसमाहारविलक्षणेन प्रयत्नेन प्रयोक्तव्यः, न क्रुष्टेन नापि मन्द्रादिभिः, इत्यर्थः । प्रयुज्यत इति प्रयोगः ।

प्लाक्षि-प्लाक्षायणयोराचार्ययोः मतेन प्रणवः स्वरितस्वरो भवति। यथा—"ओम्" ॥

उदात्तो वाल्मीकेः ॥ ६ ॥

वाल्मीकेः शाखिनो मतेन प्रणव उदात्तस्वरो भवति। यथा—"ओम्" ॥

यथाप्रयोगं[1] वा सर्वेषाम् ॥ ७ ॥

सर्वेषामाचार्याणां मतेन प्रणव उदात्तस्वरो भवति। यथाप्रयोगमुदात्त इत्यर्थः। यथा—"ओम्" इति ॥

इति माहिषेयछन्दोभाषाख्यायां प्रातिशाख्यव्याख्यायां
द्वितीयप्रश्ने षष्ठोऽध्यायः ॥

———

1. "गं स" भू०। "यथाप्रयोगशब्देन उदात्तोऽभिधीयत इति माहिषेय-पक्षः" त्रि०।

अथ सप्तमोऽध्यायः ॥

स्वरितयोर्मध्ये यत्र नीचँ स्यादुदात्तयोर्वान्य[1]तरयोर्वा उदात्तस्वरितयोः स विक्रमः ॥ १ ॥

स्वरितयोर्मध्ये उदात्तयोर्वा मध्ये स्वरितोदात्तयोर्वा उदात्तस्वरितयोर्वा मध्ये यत्र[2] नीचं स्यात् स विक्रमः, स विक्रम इति वेदितव्यः । स्वरितयोर्मध्ये यथा—"योऽस्य स्वोऽग्निस्तमपि" (सं. ५–७–९) । उदात्तयोर्यथा—"वोढवे" (सं. १—६—२) । स्वरितोदात्तयोर्यथा—"धन्वना गा धन्वना" (सं. ४—६—६) । उदात्तस्वरितयोर्यथा—"तस्य क्व सुवर्गो लोकः" (सं. २—६—५) । अन्यतर उदात्तः अन्यतरः स्वरितो वा स द्विविधः विक्रमोऽविक्रमः । विक्रमसंज्ञायाः प्रयोजनमवदाम "स्वारविक्रमयो" (१७ —६) रिति ॥

प्रचयपूर्वश्च कौण्डिन्यस्य ॥ २ ॥

प्रचयपूर्वश्च उदात्तपरो वा स्वरितपरो वा मध्ये निहतः, स च विक्रम इति वेदितव्यः कौण्डिन्यस्याचार्यस्य मतेन । यथा उदात्तपरः—"इमं मे वरुण श्रुधी हवम्" (सं. २–१–११) । स्वरितपरः—"उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणान्" (सं. २—६—२) । विक्रम इति चशब्दो ज्ञापयति ॥

द्वियम एके द्वियमपरे ता अणुमात्राः ॥ ३ ॥

---

1. "तरतो वोदा" मु० ।

2. यदक्षरं नीचमित्यर्थः ।

द्वियमे एकस्मिन् द्वियमपरे च [1]अणुमात्रा भवन्ति । द्वयोः स्वारयोः सन्निपाते पूर्वस्मिन्नणुमात्रा भवति । त्रिषु सन्निपातेषु पूर्वावणुमात्रिकौ भवतः, उत्तमः प्रकृत्या भवति । यथा द्वयोः— "तेऽन्योन्यमुपाधावन्" (सं. ६–१–५) । त्रिषु––"सोऽपोऽभ्यम्रियत" (सं. ६–१–१) । ता अणुमात्रा इति एके आचार्या मन्यन्ते । अन्ये तु स्वमात्रार्धकाले वा स्वमात्रातृतीयकाले वा स्वमात्राचतुर्थकाले वा निहतो भवतीति । यथा—"तेऽन्योन्यम्" (सं. ६–१–५) । "सोऽपोऽभ्यम्रियत" (सं. ६–१–१) । यमः स्वारः । द्वौ यमौ यत्रानन्तर्येण वर्त्तेते स द्वियमः, एके द्वियमपरे[2] एक इति काकाक्षिवदुभयत्र सञ्चरति, तद् द्रष्टव्यम् ॥

तस्यामेव प्रकृतौ ॥ ४ ॥

तस्यामेवाणुमात्रायां पातो भवति । यथा विक्रमः प्रकृतौ । त एवोदाहरणे भवतः । "तेऽन्योन्यमुपाधावन्" (सं. ६—१—५) । "सोऽपोऽभ्यम्रियत" (सं. ६—१—१) ॥

न पूर्वशास्त्रे ॥ ५ ॥

पूर्वविशिष्टं शास्त्रं पूर्वशास्त्रम्[3] । न खलु पूर्वशास्त्रे तस्यामणुमात्रायां पातो भवति । विक्रमः प्रकृतौ पूर्वशास्त्रे चोक्तम् ॥

इति माहिषेयछन्दोभाषायां प्रातिशाख्यव्याख्यायां
सप्तमोऽध्यायः ॥

---

1. अणुर्नाम ह्रस्वकालस्य चतुर्थोंऽशः ।
2. द्वियमः परो यस्मादसौ, तस्मिन् ।
3. "पूर्वशास्त्रं नाम विक्रमविधिः । तस्मिन्नेतदणुकार्यं न भवति । एवं वा सूत्रार्थः—पूर्वशास्त्रे अध्याय-प्रथमसूत्रे या विक्रमसंज्ञा उक्ता सा कम्पविधावत्र न भवति । विक्रमस्य दृढप्रयत्नत्वात्, कम्पस्य तदभावात् इति" ! त्रि० ।

अथ अष्टमोऽध्यायः ॥

## इवर्णोकारयोर्यवकारभावे क्षैप्र उदात्तयोः ॥ १ ॥

इवर्णस्योकारस्य च उदात्तयोर्यथोपदेशं यवकारभावे यः स्वारो विहितः स क्षैप्र इति वेदितव्यः । यथा—"अभ्यस्थात्" (सं. ४—२—८) । "ऊत्यश्यामरयिम्" (सं. १–३–१४) । "स्वस्माँ अदितेः" (सं. ४—७—१५) । "दिक्ष्वृध्नुवन्ति" (सं. ३–५–१०) । उदात्तयोरिति किम् ? "इत्याह देवान्" (सं. २—५—९) । "वस्व्यसि" (सं. १—२—५) । "अन्वेनम्" (सं. ४—६—८) ॥

## [1]अनुदात्तं पदमेकवर्जम् ॥ २ ॥

एकमुदात्तं वा स्वरितं वा वर्जयित्वा शिष्टमनुदात्तं भवति ॥

## सयकारवकारं त्वक्षरं यत्र स्वर्यते स्थिते पदे अनुदात्तपूर्वेऽपूर्वे वा नित्य इत्येव जानीयात् ॥ ३ ॥

सयकारं वा सवकारं वा अक्षरं स्थिते पदे यत्र स्वर्यते अनुदात्तपूर्वे वाऽपूर्वे वा स नित्यस्वार इति ज्ञापयितव्यः । "इन्द्रियं वीर्यम्" (सं. २—३—७) । "पुरीष्यासः" (सं. ४—२—४) । "याज्यैषा वै सप्तपदा" (सं. २–६–२) । "ततो बिल्व उदतिष्ठत्" (सं. २–१–८) । "तस्य क्व सुवर्गो लोकः" (सं .२—६—५) । "न्यङ्ङग्निः", "न्यञ्चम्" (सं. ५—५—३) । स्थिते पद इति किम् ? "ऊत्यश्याम रयिम्"

---

1. इदं सूत्रं नास्ति । मु० । भू० ।

(सं. १—३—१४)। "स्वस्मान्" (सं. ४—७—१५)। अनुदात्तपूर्वेऽपूर्व इति किम्? "अमर्त्यो मर्त्यां आ विवेश" (सं. ५—७—९)। "वस्व्यसि" (सं. १—२—५)॥

अपि चेन्नानापदस्थमुदात्तमथ चेत्सांहितेन स्वर्यते स प्रातिहतः ॥ ४ ॥

अपि चेन्नानापदस्थे उदात्ते अथ चेत्सांहिते स्वर्यते स खलु प्रातिहतो नाम स्वरो वेदितव्यः । यथा—"याज्यैवैनमेतया" (सं. २—३—५)। "सवनमुखे सवनमुखे कार्येति" (सं. ७—५—५)। "अथोक्थ्योऽथातिरात्रः" (सं. ७—१—५)॥

तस्मादकारलोपेऽभिनिहतः ॥ ५ ॥

तस्मादुदात्तादकारलोपेऽनुदात्ते यत्र स्वर्यते स खलु अभिनिहतो नाम स्वरो वेदितव्यः । यथा—"तेऽब्रुवन्" (सं. २—५—१)। "सोऽब्रवीत्" (सं. २—१—२)॥

ऊभावे प्रश्लिष्टः ॥ ६ ॥

उकारयोरुदात्तानुदात्तयोरूभावे यत्र स्वर्यते स प्रश्लिष्टो नाम स्वरो वेदितव्यः । यथा—"मासूत्तिष्ठन्" (सं. ७—५—२)। "सून्नयामिव" (सं. ६—२—४)। "सूद्गाता" (सं. ७—१—८)॥

पदविवृत्त्यां पादवृत्तः ॥ ७ ॥

पदविवृत्त्यां यत्र स्वर्यते स पादवृत्त इति ज्ञेयः । यथा— "ता अस्मात् सृष्टाः" (सं. २—१—२)। पदग्रहणं किम्? "प्रउगमुक्थमव्यथयत्" (सं. ४—४—२)॥

उदात्तपूर्वस्तैरोव्यञ्जनः ॥ ८ ॥

उदात्तपूर्वो यत्र स्वर्यते स खलु तैरोव्यञ्जनो नाम स्वारो वेदितव्यः। यथा—"युञ्जन्त्यस्य काम्या" (सं. ७—४—२०)। "इन्द्रोऽमन्यताऽनया" (सं. ७—१—५)। "प्रउगमुकूथमव्यथयत्" (सं. ४-४-२)॥

## इति स्वारनामधेयानि ॥ ९ ॥

इत्येतानि स्वारनामधेयानि व्याख्यातव्यानि भवन्ति क्षैप्र-नित्य-प्रातिहता-भिनिहत-प्रश्लिष्ट-पादवृत्त-तैरोव्यञ्जनानि[1]। यथा—"ऊत्यश्याम" (सं. १—३—१४)। "दिक्ष्वृध्नुवन्ति" (सं. ३ ५—१०)। "न्यञ्चम्" (सं. ५—५—३)। "त्वष्टाधत्त" (सं. १—५—१)। "तेन सुहोता सूद्गाता" (सं. ७—१—८)। "त एनं भिषज्यन्ति" (सं. २—३—११)। "स इन्द्रोऽमन्यत" (सं. ७—१—५)॥

## क्षैप्र-नित्ययोर्दृढ[2]प्रयत्नतरः ॥ १० ॥

कालो भवति। यथा—"अभ्यस्थात्" (सं. ४—२—८)। "तिष्यो नक्षत्रम्" (सं. ४—४—१०)॥

## अभिनिहते च ॥ ११ ॥

अभिनिहते स्वारे च दृढप्रयत्नतरः कार्यो भवति। यथा—"सोऽर्कोऽभवत्" (सं. ५-४-३)। दृढतर इति [3]चशब्दोऽन्वादिशति॥

## प्रश्लिष्ट-प्रातिहतयोर्मृदुतरः ॥ १२ ॥

प्रयत्नो वेदितव्यः क्षैप्रात्। यथा—"सूर्न्नीयमिव" (सं. ६-२-४)। "भेषजं गवेऽश्वाय"(सं १—८—६)॥

---

1. एतानि सप्त स्वरितनामधेयानीत्यर्थः।
2. "दृतरः" मू०।
3. "अन्वाचये वर्त्तमानश्चकारः दृढमात्रं बोधयति, न तु दृढतर इति" त्रि०।

तैरोव्यञ्जन-पादवृत्तयोरल्पतरः ॥ १३ ॥

तैरोव्यञ्जनः, पादवृत्तः, इत्येतयोः स्वारयोः क्षैत्रादल्पतरः प्रयत्नो भवति। यथा—"उप दधाति" (सं. ५—२—१०)। "स इधानः" (सं. ४—४—४) ॥

इति छन्दोभाषाख्यायां प्रातिशाख्यव्याख्यायां
विंशोऽध्यायः ॥

———

## अथ नवमोऽध्यायः ॥

### व्यञ्जनँ स्वराङ्गम् ॥ १ ॥

स्वराङ्गं व्यञ्जनमिति वेदितव्यम् । न खलु स्वरोऽङ्गं व्यञ्जने भवति । तस्मात् स्वरप्रधानकारणमात्रमेव व्यञ्जनम् । यत् पुनः पूर्वोक्तव्यञ्जनमर्द्ध-कालमात्रम्, स्वरश्च ह्रस्वकालमात्रः इति, एतयोः संयोगे अध्यर्धमात्रं स्यात्, तत्प्रतिषेधार्थँ स्वराङ्गमित्युच्यते । यथा अप्सु पयसि आनीते पयसः श्वेतो वर्ण उपलक्ष्यते नोदकस्य, तद्वत् । स्वरव्यञ्जनयोः संयोगे व्यञ्जनस्य नोपलब्धिर्भवति अङ्गभूतत्वात् ॥

### तत्परस्वरम् ॥ २ ॥

तद्वत् खलु व्यञ्जनपरस्वरो वेदितव्यः । यथा—'क' इत्युच्यते ककारपूर्वः अकारपरः । एवं सर्वत्रेति ॥

### अवसितं पूर्वस्य ॥ ३ ॥

यदन्त्यं व्यञ्जनं पदावसानवर्तीत्यर्थः, तत् पूर्वस्य स्वरस्याङ्गं भवति । अत्रोच्यते—द्वयो स्वरयोरन्तराले बहूनि व्यञ्जनानि स्युः तेषां पूर्वोत्तर-विभागः क्रियते । यदन्त्यं पूर्ववत् पूर्वस्य स्वरस्याङ्गं भवति । यथा—"वषट् ते विष्णवासः" (सं. २—२—१२) ॥

### [1]संयोगि च ॥ ४ ॥

---

1. "संयोगादि" मु० । भू० ।

संयोगः द्वयोर्वा बहूनां वा व्यञ्जनानां भवति। तत्रान्त्यं व्यञ्जनं पूर्वस्य स्वरस्याङ्गं भवति। यथा—"तस्माद्विधृता अध्वानोऽभूवन्" (सं. २—५—११), "सूर्यो देवः" (सं. ३—३—१०) इत्येवमादौ न सिध्यति, "नान्तस्थापर०" (२१—७) इति प्रतिषेधात्। अस्मिंस्तु सप्रतिषेधविषयेऽपि सिध्यत्येव। अन्यथा ह्यनर्थकमेव स्यात्॥

परेण चासँहितम्॥ ५॥

संयोग एव बहून्यपि व्यञ्जनानि पूर्वस्य स्वरस्यांगानि भवन्ति, यत्परेण संयुक्तं तद्वर्जयित्वा। यथा-"बृहस्पतिरकामयत" (सं. ७—२—३)। "ब्रह्मवर्चसो गृह्यन्ते" (?)। यथा— "सारियति" (सं. ६—४—११)॥

[1]अनुस्वारस्स्वरभक्तिश्च॥ ६॥

पूर्वस्यैव स्वरस्याङ्गं भवति अनुस्वारः स्वरभक्तिश्च। यथा— "शोंसा मोद इवेति" (सं. ३—२—९)। "गोमां अग्ने" (सं. १—६—६)। "गार्हपत्यमा दधाति" (सं. १—५—४)। "सप्तर्षीन् पर एकमाहुः" (सं. ४—६—२)॥

[2]नान्तस्थापरमसवर्णम्॥ ७॥

अन्तस्थापरमसवर्णमसरूपं पूर्वस्य स्वरस्याङ्गं न भवति। पूर्वस्याङ्ग-प्रतिषेधात् परस्यैव तदङ्गमिति वेदितव्यम। यथा—"इषे त्वोर्जे त्वा" (सं. १—१—१)। "देवा वै देवयजनमध्यवसाय" (सं. ६—१—५)। असवर्णमिति किम्? "अग्निः सर्वा देवताः" (सं. २—२—९)॥

नासिक्याः॥ ८॥

---

1. "अनुस्वारः", "स्वरभक्तिश्च" इति प्रत्येकं व्याख्यातम्। भू०।

2. नञ् नास्ति। भू०।

नासिक्या न खलु पूर्वस्य स्वरस्याङ्गानि भवन्ति। यथा—"रुक्ममुप दधाति" (सं. ५—२ ७)। "क्षत्रेण राज्ञे समनमत्" (सं. ७—५—२३)॥

**स्पर्शश्चोष्मपर ऊष्मा चेत् परस्य[1] ॥ ९ ॥**

स्पर्श ऊष्मपरः पूर्वस्य स्वरस्याङ्गं न भवति, ऊष्मा यदि चेत् स्पर्शपरः। यथा—"यत्सौर्यो भवति" (?)। ऊष्मपर इति किम्? "वषट् ते विष्णवासः" (सं. २—२—१२)। ऊष्मा चेत्परस्येति किम्? "अग्रहन्त्यक्षणया व्याघारयति" (सं. ५—२—७)॥

**स्वरितात्सँहितायामनुदात्तानां प्रचय उदात्तश्रुतिः ॥**

स्वरितात्परेषामनुदात्तानां अनुदात्तयोर्वा अनुदात्तस्य वा संहितायां प्रचयो भवति। यथा—"पाक्या चिद्वसवो धीर्या चित्" (सं. २—१—११)। प्रचय उदात्तश्रुतिरित्युच्यते॥

**नोदात्तस्वरितपरः ॥ ११ ॥**

उदात्तपरस्य वा स्वरितपरस्य वा अनुदात्तस्य प्रचयो न भवति। यथा—"इमं मे वरुण श्रुधी हवम्" (सं. २—१—११)। "पाक्या चिद्वसवो धीर्या चित्" (सं. २—१—११)॥

**स्पर्शादनुत्तमा[2]दुत्तमपरादानुपूर्व्यान्नासिक्याः ॥ १२ ॥**

अनुत्तमात् स्पर्शात् उत्तमपरादानुपूर्व्येण नासिक्यानामागमो भवति। द्वितीयस्पर्शाद् द्वितीयनासिक्याः, तृतीयस्पर्शात्तृतीयनासिक्याः, चतुर्थस्पर्शाच्चतुर्थाः। यथा—"स प्रब्रवत्" (सं. २—२—१२)। "ग्रन्थिं ग्रथ्नीयत्" (सं. ६—२—९)। "विद्मा ते अग्ने" (सं. ४—२—२)।

---

1. "रश्च"। मू०।
2. "मा उ"। मू०।

"यद्दध्ना मधुमिश्रेण" (सं. ५—२—८)। स्पर्शादिति किम् ? "इमं मे वरुण" (सं. २—१—११)। "कल्माषी भवति" (सं. ५–१–१)। अनुत्तमादिति किम् ? "यत्ते अग्ने तेजस्तेन" (सं. ३—५—३) ॥

तान्यमानेके ॥ १३ ॥

एके आचार्यास्तान्नासिक्यान् यमानिति ब्रुवते । तान्येवोदाहरणानि ॥

हकारान्नणमपरान्नासिक्यम् ॥ १४ ॥

हकारान्नकार-णकार-मकार-परान्नासिक्यमभिधानमिच्छन्त्येके आचार्याः। यथा नः—"अह्नां केतुरुषसामेत्यग्रे" (सं. २–४–१४)। यथा णः—"शरद्यपराह्णे" (सं. २—१—२)। यथा मः—"ब्रह्म जज्ञानमिति" (सं. ५—२—७) ॥

रेफोष्मसंयोगे रेफस्स्वरभक्तिः ॥ १५ ॥

रेफस्य ऊष्मणश्च संयोगे रेफः स्वररूपं भक्तिं भजते। योऽस्य समानकरणः स्वरः तद्भक्तिर्भवितुमर्हति। ऋकारश्चास्य जिह्वाग्रकरणत्वेन सधर्मा। भक्तिरवयव एकदेश इत्यनर्थान्तरम्। एतदुक्तं भवति—ऋकारावयवो भवतीति यावत्। ऋकारस्य तु आदितः स्वरपरः पादमात्रः अन्ते वा मध्यमे रेफोऽर्धमात्रः। एवंप्रकारस्य ऋकारस्य उत्तरार्धो भवतीत्यर्थः। रेफस्याणुमात्रत्वादर्धमात्र एव भवति। ऋकारे त्रयः अर्द्धमात्रास्स्वरभक्तयः सन्ति, आदौ मध्ये अन्ते च। रेफविधाने प्रयोजनं न + + + स न भवति। आदौ स्वरभक्तिः सोऽपि न भवति रेफस्यास्य अन्तस्वरूप + + त्। अन्ते यः स्वरभक्तिः स आदिस्वरूपः। आदिस्वरूपस्य चान्तस्वरूपस्य च सम्भवे आदिस्वरूप एव युक्तम्। यथा—"दर्शपूर्णमासौ यजेत" (सं. २—५—४)। "मण्डूकेन वि कर्षति" (सं. ५–४–४)। "बर्सन्नह्यत्यप्रस्रँसाय" (सं. २—५—७)। इह कस्मान्न भवति।

"यो वै श्रद्धाम्" (सं. १—६—८)। "तेऽस्मात् स विस्रस्यः" (सं. २—६—९) इति। "रेफोष्मसंयोगः" इति रेफस्य पूर्वनिहतो विवक्षितः॥

न क्रमे प्रथमपरे ॥ १६ ॥

न खलु रेफ ऊष्मपरः क्रमे प्रथमपरे चोष्मणि स्वरभक्तिर्भवति। यथा क्रमे—"वर्ष्याभ्यः स्वाहा" (सं. ७—४—१३)। प्रथमपरे—"वर्ष्टी पर्जन्यः" (सं. ७—५—२०)। क्रम इति किम्? स्वरोऽनुस्वारो विहितो द्विरुच्येत। संयोगादिर्यः स विक्रमः॥

इति छन्दोभाषाख्यायां प्रातिशाख्यव्याख्यायां
द्वितीयप्रश्ने नवमोऽध्यायः॥

## अथ दशमोऽध्यायः ॥

### शब्दः प्रकृतिः सर्ववर्णानाम् ॥ १ ॥

प्रकृतिस्तस्य चोत्पत्तिरित्यर्थः । सा व्याख्याता पुरस्तात् "वायुशरीर-समीरणात्०" (२—२) इति ॥

### तस्य रूपान्यत्वे वर्णान्यत्वम् ॥ २ ॥

तस्य शब्दस्य प्रातिश्रुत्कविशेषात् रूपान्यत्वाद्वर्णान्यत्वं भवति । एवं प्रकृतस्य शब्दस्य रूपान्यत्वविशेषान्नानात्वं वर्णानां भवति । यथा—अ इ उ इति ॥

### तत्र शब्दद्रव्याण्युदाहरिष्यामः ॥ ३ ॥

तेषां वर्णानां संघातप्रयोगे शास्त्रमित्युच्यते । तस्य शब्द इति पर्यायनाम । तस्मिन् शास्त्रे यानि द्रव्याणि भवन्ति, तान्युदाहरिष्यामः । यद्यत्कर्म येन येन क्रियते तत्तस्य द्रव्यमित्युच्यते । यथा—घटस्य मृदिति । एवं शास्त्रस्य वर्णाः । तानि शास्त्रद्रव्याणि वक्ष्यामः ॥

### वर्ण-कारौ निर्देशकौ ॥ ४ ॥

वर्णशब्दश्च कारशब्दश्च निर्देशवाचकौ स्याताम् । यत्र यत्र वर्णशब्दः श्रूयते तत्र निर्देऽशोऽयमिति वेदितव्यः । यथा—"अवर्णव्यञ्जन-शकुनि०" (६—७) इति । "अथ षकारँ सकार-विसर्जनीयौ" (६—१) इति ॥

### चापीत्यन्वादेशकौ ॥ ५ ॥

चशब्दश्च अपिशब्दश्चान्वादेशकौ भवतः। यत्र यत्र चशब्दो वा अपिशब्दो वा श्रूयते तत्र तत्रान्वादेशोऽयमिति वेदितव्यः। यथा— "स म ह द थ पितृपूर्वश्च" (४—७)। "इति परोऽपि" (४—४) इति॥

त्वथैवेति विनिवर्त्तका[1]-धिकारका-वधारकाः ॥ ६ ॥

तुशब्दः, अथशब्दः, एवशब्दः इत्येते आनुपूर्व्येण विनिवर्त्तके अधिकारे अवधारणे च भवन्ति। यत्र यत्र तुशब्दः श्रूयते तत्र तत्र विनिवर्त्तनमिति वेदितव्यम्; यत्र यत्र अथशब्दः श्रूयते तत्र तत्राधिकार इति; यत्र यत्र एवशब्दः श्रूयते तत्र तत्रावधारणमिति। यथा—"एफस्तु रस्य" (१—१९), "अथ संहितायामेकप्राणभावे" (५—१), "ऊष्मपर एवैकेषामाचार्याणाम्" (९—५)॥

वेति वैभाषिकः ॥ ७ ॥

वाशब्दो विभाषायां भवति। यत्र यत्र वाशब्दः श्रूयते तत्र तत्र विभाषायामिति वेदितव्यः। यथा—"मुखनासिक्या वा" (२—५०)॥

नेति प्रतिषेधकः[2] ॥ ८ ॥

नशब्दः प्रतिषेधको भवति। यत्र यत्र नशब्दः श्रूयते तत्र तत्र प्रतिषेधकोऽयमिति वेदितव्यः। यथा—"नानुत्तम उत्तमपरः" (१४—२४) इति॥

आयामो दारुण्यमणुता खस्येत्युच्चैः[3]कराणि शब्दस्य॥

आयामः प्रसारित्वं दारुण्यं दृढत्वं तस्माच्छरीरस्य आयामः कार्यः अङ्गानां दृढत्वम्। खमिति कण्ठः, स चोक्तः पुरस्तादिति। तस्य च

---

1. "र्तकाधिकाधि" भू०।
2. "धः" आ०।
3. "करणानि श" भू०।

कार्श्यम्। एवंयुक्तस्य उच्चशब्दो भवति । तेनैवोदात्तः क्रियते। स चोक्तः पुरस्तादिति ॥

अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकराणि ॥

अन्ववसर्गः संहारः मार्दवं प्रस्रंसनं उरुता तस्मात् शरीरस्य संहारः कार्यः । अङ्गानां प्रस्रंसनं कण्ठस्य स्थूलता एवंयुक्तस्य नीचशब्द उत्पद्यते । तेनैवानुदात्तः क्रियते । स चाप्युक्तः पुरस्तादिति ॥

मन्द्र-मध्यम-ताराणि स्थानानि भवन्ति ॥ ११ ॥

मन्द्रमिति प्रथमम्, मध्यममिति द्वितीयम्, तारमिति तृतीयम्। तेषां स्थानानामुत्तरत्र प्रयोजनं वक्ष्यामः ॥

तत्रैकविँशतिर्यमाः ॥ १२ ॥

तेषु त्रिषु स्थानेषु एकविंशतिर्यमा भवन्ति। तेषां यमानामुत्तरत्र विभागं वक्ष्यामः इति ॥

ऋग्विरामः पदविरामो विवृत्ति[1]विरामः समानपदविवृत्तिविरामस्त्रिमात्रो द्विमात्र एकमात्रोऽर्धमात्र इत्यानुपूर्व्येण ॥

ऋचि पदे विवृत्यां समानपदविवृत्यामिति एतेषु विरामः तस्य विरामस्य कालपरिणामो वेदितव्यः । ऋक्षु त्रिमात्राकालो विरामः, पदेषु द्विमात्राकालः, विवृत्तिष्वेकमात्राकालः, समानपदविवृत्तिष्वर्धमात्राकालः । ऋचि—"उपचिन्वन्ति वेधसः" (सं. १—१—७)। "उभा वाजस्य सातये हुवे वाम्" (सं. १—१—१४) । "देवाः", "वै", "यत्" । यज्ञे विवृत्याम्—"ता अस्मात्सृष्टाः" (सं. २—१—२) । समानपदविवृत्याम्—"प्रउगमुक्थमव्यथयत्" (सं. ४–४–२) । "इन्द्राग्नी इतीन्द्र अग्नी" (सं. ४—२—११) इति ॥

---

1. "वृत्तावि" भू० ।

यद्व्यञ्जनान्तं [1]यदु चापि दीर्घं
संयोगपूर्वं च तथाऽनुनासिकम् ।
एतानि सर्वाणि गुरूणि विद्यात्
शेषाण्यतोऽन्यानि ततो लघूनि ॥ १४ ॥

यद्व्यञ्जनान्तं यदक्षरं व्यञ्जनान्तं भवति, यदु चापि दीर्घं अक्षरम्, संयोगपूर्वं च तथानुनासिकं यच्चानुस्वारसंयुक्तमक्षरम्, एतानि सर्वाणि गुरूणि विद्यात् । एतानि सर्वाण्युक्तानि अक्षराणि गुरूणीति वेदितव्यानि । यथा व्यञ्जनान्तं दीर्घं संयोगपूर्वं च अनुनासिकसंयुक्तं च । यथा व्यञ्जनान्तम्—"मातेव पुत्रम्" (सं. ४–२–३) । दीर्घम्—"ते तेऽधिपतयः" (सं. ४-४–११) । संयोगपूर्वम्—"अश्मा च मे" (सं. ४–७–५) । "नक्षत्रविहिताहम्" (सं. २—५—२) । अनुनासिकसंयुक्तम्—"संशितं क्षत्रम्" (सं. ४—१—१०) । "सँश्रवाः" (सं. १–७–२) । शेषाण्यतोऽन्यानि ततो लघूनि अत एभ्यो गुरुभ्यः शेषाण्यक्षराणि लघूनीति वेदितव्यानि ॥

अव्यञ्जनान्तं यध्द्रस्वमसंयोगपरं च यत् ।
अननुस्वारसंयुक्तमेतल्लघु निबोधत ॥ १५ ॥

अव्यञ्जनान्तं यदक्षरं व्यञ्जनान्तं न भवति तत् ह्रस्वं यच्च ह्रस्वमक्षरं सर्वं लध्विति वेदितव्यम् । यथा—"बिभृता स्वेनम्" (सं. ४—२—३) ॥

इति छन्दोभाषाख्यायां प्रातिशाख्यव्याख्यायां
दशमोऽध्यायः ॥

---

[1] "य उ चापि" भू० ।

अथैकादशोऽध्यायः ॥

अथ वर्णविशेषोत्पत्तिः ॥ १ ॥

अथेत्यधिकारः । वर्णविशेषोत्पत्तिरित्येतदधिकृतं वेदितव्यम् । इत उत्तरं यद्वक्ष्यामः उत्तरत्रोदाहरिष्यामः ॥

अनुप्रदानात्संसर्गात् स्थानात्करणविन्ययात् ।
जायते वर्णवैशेष्यं परिमाणाच्च पञ्चमात् ॥

इति ॥२ ॥

अनुप्रदानात् अनुप्रदीयते इत्यनुप्रदानम् , तेन, संसर्गात् संसर्गेण, स्थानात् स्थानेन, करणविन्ययात् करणविन्यासेन, परिमाणात् परिमाणेन च, एतैः पञ्चभिः कारणैः वर्णानां वैशेष्यमुत्पद्यते । अकारस्य तावन्नादोऽनुप्रदानम् , कण्ठः संसर्गः, आस्यहनू स्थानम् , ओष्ठौ करणविन्यासौ, मात्राकालः परिमाणमिति । एवं सर्ववर्णानां बोद्धव्यमिति । अपभ्रष्टाश्च ये वर्णाः ककार-रेफ-तकारादयस्तेषां नातीव भेदः, समीपदेशत्वात् । [अपतानौ नकारापभ्रंशं प्रयुञ्जत एव शिष्टा पदादोचास्मत् पर्याये स यजमानः मानो मित्र + + नादौ तृतीयस्थाकारवभ्रंशा गणपर इति रेफस्य पुरस्तादिति तकारस्य तद्युक्तं किल शिष्टानामपभ्रंशं परिहरेदिति शिक्षापदम् (?)] ॥

वर्णपृक्तः शब्दो वाच उत्पत्तिः ॥ ३ ॥

वर्णमिश्रः शब्दो वाच उत्पत्तिर्भवति । यथा—आ ऊ इति । वर्णपृक्त इति किम् ? कासष्ठीवनक्षवथुप्रभृतिभिः शब्दा उत्पद्यन्ते । तेषु यथायुक्तं न स्यादिति ॥

सप्त वाचस्स्थानानि भवन्ति ॥ ४ ॥

सप्त खलु वाचः स्थानानि वेदितव्यानि । यैर्वाक् प्रकाश्यते। अस्मिन् तिष्ठन्तीति स्थानानि । यथाक्रममुदाहरिष्यामः ॥

उपाँशुध्वाननिमदोपब्धिमन्मन्द्रमध्यमताराणि ॥ ५ ॥

स्थानानि भवन्ति । उपांश्विति प्रथमं स्थानम् , ध्वानमिति द्वितीयम् , निमदमिति तृतीयम् , उपब्धिमदिति चतुर्थम् , मन्द्रमिति पञ्चमम् , मध्यममिति षष्ठम् , तारमिति सप्तमम् , इत्येतानि नामतः सप्त वाचः स्थानानि वेदितव्यानि ॥

करणवदशब्दममनःप्रयोगमुपाँशु ॥ ६ ॥

यथा यथा स्थानकरणैः वर्णा [अर्थशब्देन] प्रयुज्यमाना न मनसा, तत्स्थानमुपांश्विति वेदितव्यम् ॥

अक्षरव्यञ्जनानामनुपलब्धिर्ध्वानः ॥ ७ ॥

अक्षराणि स्वकरणवता [शब्देन चैव] यत्र स्वरो वा व्यञ्जनं वा नोपलभ्यते तत्स्थानं ध्वानमिति वेदितव्यम् । उपांशुलक्षणेऽप्यक्षरव्यञ्जनानामनुपलब्धौ सत्यां पुनर्वचनं शब्दोपलब्धिविधानार्थम् । अक्षरव्यञ्जनानां भेदेन ग्रहणमभिख्यार्थम् । अत्यन्तानुपलब्धिरित्यर्थः । तद्यथा—''न ग्राम्यस्य पशोरन्तेनारण्यस्याध्येतव्य'' मिति (?) । अन्य आहुः—अक्षराणां च विसर्जनीयानामनुपलब्धिरिति ॥

उपलब्धिर्निमदः ॥ ८ ॥

एतेनैव करणवता अक्षरव्यञ्जनानामुपलब्धिस्तत्स्थानं निमदमिति वेदितव्यम् ॥

सशब्दमुपब्दिमत् ॥ ९ ॥

करणवता शब्देनाक्षरव्यञ्जनानां यत्रोपलब्धिर्भवति तत्स्थानमुपब्दिमदिति वेदितव्यम् । [[1]ध्वाननिमदेऽपि शब्द उच्यते इह सह्यर्थं संस्कारम् (?)] ॥

**उरसि मन्द्रम् ॥ १० ॥**

यत्रोरसि स्थाने प्रयोग उपलभ्यते तत्स्थानं मन्द्रमिति वेदितव्यम् ॥

**कण्ठे मध्यमम् ॥ ११ ॥**

यत्र कण्ठे स्थाने प्रयोग उपलभ्यते तत्स्थानं मध्यममिति वेदितव्यम् ॥

**शिरसि तारम् ॥ १२ ॥**

यत्र शिरसि शिरस्स्थाने प्रयोग उपलभ्यते तत् स्थानं तारमिति वेदितव्यम् ॥

**मन्द्रादिषु त्रिषु स्थानेषु सप्त सप्त यमाः[2] क्रुष्ट-प्रथम-द्वितीय-तृतीय-चतुर्थ-मन्द्रा-तिस्वार्याः ॥ १३ ॥**

क्रुष्ट-प्रथम-द्वितीय-तृतीय-चतुर्थ-मन्द्रा-तिस्वार्या इत्येते सप्त सप्त स्वरा नामतः मन्द्रादिषु त्रिषु स्थानेषु भवन्ति ॥

**तेषां दीप्तिजोपलब्धिः ॥ १४ ॥**

तेषां खलु सप्तानां स्वराणां दीप्तिजो दीप्तित उपलब्धिर्भवति । अतिस्वार्याद्दीप्तो मन्द्रः, मन्द्राच्चतुर्थः, चतुर्थात्तृतीयः, तृतीयाद् द्वितीयः, द्वितीयात्प्रथमः, प्रथमात्क्रुष्टः, इत्येवं सर्वस्थानेषु भवन्ति ॥

---

1. "ध्वाननिमदयोरशब्दमुच्यते । इहार्थः सुकरः" इति स्यात् ।

2. 'यमाः' इत्यन्तेनैकं 'स्वार्या' इत्यन्तेन चापरं सूत्रं व्याख्यातम् । मु० । भू० ।

द्वितीय-प्रथम-क्रुष्टास्त्रय [1]आह्वारकस्वराः ॥ १५ ॥

एते त्रयः स्वरा आह्वारकाः, आयामो दारुण्यमिति लक्षणवशात् उत्क्षेपिण इत्यर्थः । एतेन तृतीयमवधिं कृत्वा चतुर्थाद्या अन्ववसर्ग इति लक्षणवशादवक्षेपिणः । तृतीयस्तु धृतप्रचय इति गम्यते ।

प्रातिलोम्येन निर्देशात्तृतीयस्त्वविधिः समः ।
उत्क्षिप्तोत्क्षिप्ततरकौ द्वितीयप्रथमौ मतौ ॥
स्यात् क्षिप्त उत्क्षिप्ततमस्तृतीया उत्तरास्त्रयः ।
चतुर्थाद्या अवक्षेप्यास्तारतम्यं तु पूर्ववत् ॥

तृतीयस्तु समः । उत्क्षेपावक्षेपयोरित्यर्थः ॥

अस्त्वेवं सामवेदे, तैत्तिरीयशाखायां किमायातम्, तत्राह —

मन्द्रादयो द्वितीयान्ताश्चत्वारस्तैत्तिरीयकाः ॥ १६ ॥

तित्तिरिणा प्रोक्तं तैत्तिरीयम्, तत्र भवास्तैत्तिरीयक। मन्द्र-चतुर्थ-तृतीय-द्वितीया स्युः । अनुदात्तस्वरितप्रचयोदात्ता इत्यर्थः ॥

एवं सामवेदोक्तक्रमं निरूप्यास्मदाचार्यक्रमं निरूपयति

द्वितीयान्मन्द्रस्तैत्तिरीयाणां तृतीयचतुर्थावनन्तरं तच्चतुर्यममित्याचक्षते ॥ १७ ॥

द्वितीयादुदात्तादनन्तरं मन्द्र अनुदात्तः तदनन्तरं तृतीयचतुर्थौ प्रचयस्वरितावित्यनेन क्रमेण चतुर्णां यमानां स्वराणां समाहारश्चतुर्यममित्याचक्षतेऽस्मत्पूर्वाचार्याः । उच्चतरादय उदात्तेऽन्तर्भवन्ति ; दृढप्रयत्नतरादयस्त्वनुदात्ते । अतश्चतुःस्वरमेव तैत्तिरीयशाखायाम् । यद्येवं स्वरितस्याप्यन्तर्भावो त्रियमत्वमेव । तत्राह—

---

1. 'आण्हार' मु० । 'आस्वार' भू० । एतत्सूत्रभाष्यमारभ्य माहिषेयभाष्यादर्शे पत्रमेकं लुप्तमिति वैदिकभूषणं योजितं यावत् अध्याय २४. सू. ३

तस्मिन् द्वियमाऽन्तरावृत्तिः ॥ १८ ॥

तस्मिंश्चतुर्यमे द्वियमावृत्तिः स्वरितस्वरूपावृत्तिरन्तरा अन्या चतुर्थी-रूयस्वररूपा। अतश्चतुर्यमत्वम्। रत्ने तु—द्वियमयोरुदात्तानुदात्तयोरन्तरा मध्ये स्वरितप्रचययोर्वृत्तिर्भवति। अत एव शीक्षा—

कनिष्ठिकाऽनामिका च मध्यमा च प्रदेशिनी।
नीचस्वारधृतोदात्तानङ्गुष्ठाग्रेण निर्दिशेत् ॥
इति ॥

तामुपदेक्ष्यामः ॥ १९ ॥

तां स्वरवृत्तिं क्रम-विक्रमसम्पन्नामित्यस्मिन् सूत्रे उपदेक्ष्यामः विधास्यामः। किम् छन्दोगप्रक्रियया वृत्तिरुपदेक्ष्यते ? नेत्याह—

तच्चतुर्यममित्युक्तम् ॥ २० ॥

चतुर्यमापेक्षया तदिति नपुंसकत्वम्। सा वृत्तिर्द्वितीयान्मन्द्र इत्यनेन चतुर्यममित्युक्ता। अतोऽस्मदाचार्यप्रक्रियोच्यत इत्यर्थः।

इदानीं उदात्तादिस्वरवृत्तेः प्रयोगमाह—

क्रमविक्रमसम्पन्नामद्रुतामविलम्बिताम्।
नीचोच्चस्वारसम्पन्नां वदेद् धृतवतीं समाम् ॥ २१ ॥

इति। क्रमो द्वित्वम्, विक्रमः स्वरितयोर्मध्य इत्युक्तलक्षणः, ताभ्यां सम्पन्नाम्, अद्रुताम् अत्वरिताम्, अविलम्बितामसन्दाम्, नीचोच्च-स्वारसम्पन्नां अनुदात्तोदात्तस्वरितसहिताम्, धृतवतीं प्रचयवतीम्, समां मध्यमाम्, [वदयन] तैत्तिरीयशाखायां द्रुतविलम्बितवृत्ती स्त इत्यर्थः ॥

इति तैत्तिरीयप्रातिशाख्यविवरणे भूषणरत्नाख्यवृत्तौ
एकादशोऽध्यायः ॥

---

अथ द्वादशोऽध्यायः ॥

## अथ चतस्रः संहिताः ॥ १ ॥

इत उत्तरं चतस्रः संहिता अधिक्रियन्त इत्येवं तद्वेदितव्यम् ॥

## पदसंहिता अक्षरसंहिता वर्णसंहिता अङ्गसंहिता चेति ॥

पञ्चमाध्यायादुपरि अथ वर्णानामित्येतदन्तं पदसंहिता । उदात्तात्पर इत्याद्यध्यायशेषः स्वरितात्संहितायामिति सूत्रद्वयं चाक्षरसंहिता । व्यञ्जनं स्वराङ्गमित्याद्यङ्गसंहिता । अथ इत्यादि शेषो वर्णसंहिता । एवं चतसृणां संहितानामेतानि चत्वारि नामानि ॥

पदसंहितालक्षणमाह—

## नानापदसन्धानसंयोगः पदसंहितेत्यभिधीयते ॥ ३ ॥

द्विस्वरविधानेन पदसंहितेत्युच्यते । यथा—"अग्ने दुभ्र गह्य किँशिल वन्यया ते इषुरिति" (सं. ५—५—९) ॥

## यथास्वमक्षरसंहितादीनामप्येवम् ॥ ४ ॥

यथा पदसंहिता नानापदसन्धाना संहितेत्युच्यते, तथैवाक्षरसंहितादीनां यथास्वं सन्धानं संहितेति वेदितव्यम् । नानाक्षराणां सन्धानमक्षरसंहिता, नानावर्णानां सन्धानं वर्णसंहिता, नानाङ्गानां सन्धानमङ्गसंहिता । यथा अक्षरसंहिता—"प्र अर्पयतु प्रार्पयतु" (सं. १—१—१) । वर्णसंहिता—"अधिषवणवसि" (सं. १—१—५) । अङ्गसंहिता—"अक्ष्णयावद्यति" (सं. ६—३—१०) ॥

गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानि च ।
लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः ॥

स्वरितोदात्तानीचत्वं श्वासो नादोऽङ्गमेव च ।
एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता ॥ ५ ॥

गुरुत्वमिदं गुर्विति ज्ञेयम् । यथा—"वषट्त् स्वाहा" (सं. ७--३--१२) इति । लघुता इदं लघ्विति ज्ञेयम् । यथा --"उदेनमुत्तराम्" (सं. ४—६—३) इति । साम्यमिदं साम्यमिति विज्ञेयम् । सर्वत्र साम्यमिति । ह्रस्वदीर्घप्लुतानि च इदं ह्रस्वमिदं दीर्घमिदं प्लुतमित्येतानि ज्ञेयानि । यथा ह्रस्वः—"गमयति" (सं. १—७—३) । दीर्घम्—"वायावेवास्य" (सं. ६—३—७) । प्लुतः—"पशू३र्नान्वारभ्या३ इति" (सं. ६—३—८) । लोपागमविकाराश्च अयं लोपः, अयमागमः, अयं विकारः, इत्येते विज्ञेयाः । यथा लोपः—"स ई मन्द्रासु" (सं. ४—१—८) । आगमः–"त्रपुश्च मे" (सं. ४–७–५) । विकारः–"समिन्द्र णो मनसा" (सं. १–४–४४) । प्रकृतिः इयं प्रकृतिरिति ज्ञेया । यथा—"अभ्रे दुभ्र गह्य किंशिल वन्यया ते" (सं. ५—५—९) । " प्रपा असि " (सं. २ —५—१२) । विक्रमः अयं विक्रम इति ज्ञेयः । यथा—"वोढवे जातवेदः" (सं. १—६—२) । क्रमः अयं क्रम इति ज्ञेयः । यथा—"यद्वै होताध्वर्युम्" (सं. ३—२—९) । अन्यतरो विक्रमः क्रम इत्युक्तः । स्वरितोदात्तनीचत्वं इदं स्वरितमिदमुदात्तमिदं नीचमित्येतानि ज्ञेयानि । यथा स्वरितः—" न्यश्वम् " (सं. ५—५—३) । उदात्तः—" गां वाव तौ तत्पारि" (सं. १–७–२) । नीचत्वम्-"अवदताम्" (सं. १–७–२) । श्वासः अयं श्वास इति ज्ञेयः । यथा—"करोति" (सं. ५—१—६) । नादः अयं नाद इति ज्ञेयः । यथा—"दधाति" (सं. ५—७—१) । अङ्गमेव च इदमङ्गमिति ज्ञेयम् । यथा—"तं मत्स्यः प्राब्रवीत्" (सं. २—६—६) । एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता, एतत् खलु सर्वं यथोक्तं विज्ञेयं गुर्वादिषोडशविधानं छन्दोभाषामधीयता ॥

पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः ।
स्वरमात्राविभागज्ञो गच्छेदाचार्यसम्पदम् ॥ ६ ॥

पदक्रमविशेषज्ञः पदानां क्रमविशेषं यो वेत्ति, वर्णक्रमविचक्षणः यश्च वर्णानां क्रमविचक्षणः, स्वरमात्राविभागज्ञः यश्च स्वराणां विभागं वेत्ति, गच्छेदाचार्यसम्पदम्, एवंविधः स खलु आचार्यसमीपं गच्छति । आचार्याः पुनर्व्यासप्रभृतयः । तेषां च ब्रह्मलोके स्थानम्, यश्चेदं शास्त्रमधीते स अचार्यभूतः तेषां सदनं पूतो मेध्यो ब्रह्मणः सायुज्यं सालोक्यं च गच्छति । पदक्रमसदनम् ॥

इति छन्दोभाषाख्यायां प्रातिशाख्यव्याख्यायां द्वितीयप्रश्ने
द्वादशोऽध्यायः ॥

इति माहिषेयकस्य छन्दोभाषायां भाष्यतश्चतुर्विंशोऽध्यायः ॥
प्रातिशाख्यं समाप्तम् ॥

---

# प्रातिशाख्यसूत्रस्थपदानां सूची

# BOHOL PROVINCE

**BAGO SECO RIVER, MABINI**

LOCATION.—About 1 km. northwest of Batuanan on the Batuanan-Ubay trail.

RECORDS AVAILABLE.—From January 19 to July 18, 1922.

GAGE.—Standard metric gage board vertically nailed to the "Bitan-ag" tree on the right bank of the river. It reads from 50 cm. to 4 m.

DISCHARGE MEASUREMENTS.—Made by wading at ordinary stage and by float at extreme high water.

CHANNEL AND BANKS.—Channel straight 20 m. above and 50 m. below the station. Both banks low, clayey, and subject to overflow. Stream bed sandy and considerably shifting.

EXTREMES OF DISCHARGE.—Maximum discharge recorded during period of observation, 27,541 second-liters on May 21, 1922; minimum discharge, 73 second-liters in April and May, 1922.

DIVERSIONS.—None.

REGULATION.—None.

UTILIZATION.—For irrigation purposes.

ACCURACY.—Rating curves are well defined for low and medium stages; records good. High-water extension of rating curve not based on measurements and determinations above 3,000 second-liters may be considerably in error. Gage read twice daily.

*Discharge measurements of Bago Seco River, near Batuanan, Mabini, Bohol*

| Date | Made by— | Gage height (meters) | Discharge (second-liters) | Remarks |
|---|---|---|---|---|
| **1921** | | | | |
| December 6. . . | W. Demers and A. Baldonado. | Investigation. | 970 | . . . . . |
| **1922** | | | | |
| January 19 . . . . . . | A. Baldonado . . . | 1 90 | 1,680 | . . . . . . . . |
| March 2. . . . . . . . . . . . | . . do . . . . . . . . . . | 1 54 | 330 | . . . . . . . . . |
| April 6 . . . . . . . | . do . . | 1 48 | 156 | . . . . . . . . |
| May 7 . . . . . . | . . . do . . . . | 1 46 | 147 | . . . . . . |
| June 30. . . . . . . | . . . do . . | 1 54 | 429 | . . . . . . . . . |
| September 6 . . . . . | . do . . . . . | 3 31 | . . . | . . . . . . |

*Daily and monthly discharges, in liters per second, of Bago Seco River near Batuanan, Mabini, Bohol, for the year 1922*

| Day | January | February | March | April | May | June | July | August | September | October | November | December |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| 1 | | 1,118 | 381 | 282 | 73 | 190 | 610 | | | | | |
| 2 | | 3,261 | 330 | 190 | 73 | 147 | 460 | | | | | |
| 3 | | 1,576 | 330 | 190 | 73 | 235 | 282 | | | | | |
| 4 | | 2,027 | 282 | 190 | 73 | 235 | 235 | | | | | |
| 5 | | 1,905 | 282 | 190 | 128 | 190 | 190 | | | | | |
| 6 | | 1,788 | 282 | 190 | 109 | 147 | 147 | | | | | |
| 7 | | 2,589 | 282 | 190 | 109 | 355 | 147 | | | | | |
| 8 | | 1,526 | 282 | 190 | 109 | 190 | 212 | | | | | |
| 9 | | 1,427 | 282 | 190 | 109 | 147 | 212 | | | | | |
| 10 | | 1,118 | 282 | 190 | 90 | 109 | 9,553 | | | | | |
| 11 | | 957 | 282 | 258 | 90 | 109 | 10,569 | | | | | |
| 12 | | 774 | 381 | 190 | 73 | 90 | 1,905 | | | | | |
| 13 | | 739 | 489 | 190 | 90 | 90 | 920 | | | | | |
| 14 | | 739 | 355 | 190 | 73 | 90 | 489 | | | | | |
| 15 | | 674 | 282 | 190 | 73 | 90 | 579 | | | | | |
| 16 | | 642 | 1,035 | 190 | 73 | 90 | 548 | | | | | |
| 17 | | 579 | 957 | 147 | 109 | 90 | 1,202 | | | | | |
| 18 | | 579 | 610 | 147 | 73 | 90 | 1,289<br>23,360 | | | | | |
| 19 | 1,905 | 548 | 548 | 212 | 73 | 147 | | | | | | |
| 20 | 7,461 | 548 | 460 | 147 | 489 | 235 | | | | | | |
| 21 | 1,576 | 642 | 355 | 147 | 27,541 | 674<br>15,525 | | | | | | |
| 22 | 25,353 | 774 | 330 | 128 | 9,225 | 674 | | | | | | |
| 23 | 27,033 | 579 | 282 | 109 | 518 | 1,245 | | | | | | |
| 24 | 7,965 | 489 | 282 | 109 | 381 | 518 | | | | | | |
| 25 | 4,773 | 489 | 282 | 109 | 330 | 330 | | | | | | |
| 26 | 2,223 | 433 | 282 | 109 | 258 | 330 | | | | | | |
| 27 | 2,757 | 381 | 282 | 109 | 235 | 258 | | | | | | |
| 28 | 1,576 | 381 | 282 | 109 | 235 | 235 | | | | | | |
| 29 | 1,076 | | 282 | 90 | 212 | 212 | | | | | | |
| 30 | 706 | | 282 | 73 | 190 | 2,156 | | | | | | |
| 31 | 1,076 | | 282 | | 190 | | | | | | | |
| Maximum | 27,033 | 3,261 | 1,035 | 282 | 27,541 | 15,525 | 23,360 | | | | | |
| Minimum | 706 | 381 | 282 | 73 | 73 | 90 | 147 | | | | | |
| Mean | 6,575 | 1,046 | 375 | 165 | 1,338 | 571 | 2,939 | | | | | |

शा

---

## INDEX OF CITATIONS

*Made in the Commentary, from the Taittirīya-saṃhitā.*

Note : This index relates to the words or passages of the *Taittirīya-saṃhitā* cited in the commentary as examples or counter-examples. The references are made here in the order : Kāṇḍa, Prapāṭhaka, and Anuvāka. If a cited word or passage occurs more than once in the text, reference is given to the later occurences also.

### KĀṆḌA I.

KĀṆḌA II.

KĀṆḌA III.

## KĀṆḌA IV.

## KĀṆḌA V.

PRINTED AT THE MADRAS LAW JOURNAL PRESS, MYLAPORE, MADRAS.